# CHANDA KOUSIKA

A DRAMA

BY

ARYA KSHEMISHWARA

*Edited with a*

COMMENTARY

BY

PANDIT JIBANANDA VIDYASAGARA B. A.
Superintendent Free Sanskrit College.



CALCUTTA.

*Printed at the Ramayana Press.*

1884.

*To be had from Pandit Jibananda Vidyasagara B. A.
Superintendent Free Sanskrit College, Calcutta.*

# चण्डकौशिकं

नाम

नाटकम् ।



आर्य्यक्षेमीश्वरविरचितम्

बि, ए, उपाधिधारिणा

श्रीजीवानन्द विद्यासागर-भट्टाचार्य्येण

विरचितया टीकया

समुद्भासितम्

तेनैव प्रकाशितम्



कलिकाता-राजधान्याम्

रामायण-यन्त्रे

मुद्रितम्

इं १८८४ ।

# चण्डकौशिकम् ।

## प्रथमाङ्कः ।

॥ नान्दी ॥ (क)

देवस्त्रैगुण्यभेदात् सृजति वितनुते संहरत्येष लोकान्,
अस्यैव व्यापिनीभिस्तनुभिरपि जगद्व्याप्तमष्टाभिरेव ।
वन्द्यो नास्येति पश्यन्निव चरणगतः पातु पुष्पाञ्जलिर्वः
शम्भोर्नृत्यावतारे वलय-फणि-फणा-फूत्कृतैर्विप्रकीर्णः ॥ (ख)

---

(क) नान्दीति । नन्दयतीति नान्दी मङ्गलप्रशस्तिरिति यावत् साचात्र द्वादशपदा तदुक्तं देवद्विजन्टपादीनां स्तुतिर्यस्मात् प्रयुज्यते । आशीर्वचनसंयुक्ता तस्मान्नान्दीति कीर्त्तिता ॥ माङ्गल्य-शङ्खचन्द्राज-कोक-कैरवशंसिनी । पादैर्युक्ता द्वादशभिरष्टाभिर्वा पदैरुतेति ॥

(ख) प्रथमां नान्दीमाह देव इति । एष देवः त्रयाणां गुणानां रजःसत्त्वतमसां समाहारः त्रिगुणं तस्य भावः त्रैगुण्यं तस्य भेदात् विभिन्नत्वात् लोकान् जगन्ति सृजति रजोमूर्त्ति-ब्रह्मरूपेणेति भावः वितनुते विस्तारयति पालयतीत्यर्थः सत्त्वमूर्त्ति-विष्णुरूपेणेति भावः तथा संहरति तमोमूर्त्ति-रुद्ररूपेणेति भावः । अस्यैव देवस्य व्यापि-नीभिः महतीभिरित्यर्थः अष्टाभिरेव तनुभिः शरीरैः चित्यप्तेजोमरुद्-व्योम-सूर्य्य-चन्द्र-यजमानरूपैरिति भावः जगत् व्याप्तं पूरितम् । अस्य देवस्य वन्द्यः अर्च्चनीयः न कोऽप्यस्तीति शेषः इति पश्यन्निव विचारय-

अपिच

अरुणनयनं सभ्रूभङ्गं दरस्फुरिताधरं
सुतनु! शशिनः क्लिष्टां कान्तिं करोतु तवाननम्।
कृतमनुनयैः, कोपोऽयं ते मनस्विनि! वर्द्धताम्,
इति गदितयाश्लिष्टो देव्या, शिवाय शिवोऽस्तु वः ॥ (ग)

---

स्निव नृत्यावसरे नर्त्तनसमये शम्भोः शिवस्य वलयभूता ये फणिनः तेषां फणानां फूत्कृतैः फुत्कारमरुद्भिः विप्रकीर्णः विक्षिप्तः अपि-रत्नाध्याहार्य्यः चरणगतः पुष्पाणाम् अञ्जलिः देवैर्दत्त इति शेषः वः युष्मान् पातु रक्षतु। स्रग्धरावृत्तं म्रभ्नैर्यानां त्रयेण त्रिमुनियति-युता स्रग्धरा कीर्त्तितेयमिति लक्षणात्। पश्यन्निवेति क्रियागता वाच्योत्प्रेक्षेयम्। भवेत् सम्भावनोत्प्रेक्षा प्रकृतस्य परात्मना। वाच्या प्रतीयमाना सा प्रथमं द्विविधा मता। वाच्येवादिप्रयोगे स्यादप्रयोगे परा पुनः। जातिर्गुणः क्रिया द्रव्यं यदुत्प्रेक्ष्यं द्वयोरपि। तदष्ट-धापि प्रत्येकं भावाभावाभिमानतः। गुणक्रिया स्वरूपत्वान्निमित्तस्य पुनश्च ताः। द्वात्रिंशद्विधतां यान्तीति साहित्यदर्पणकारोक्तेः।

(ग) प्रणयकुपितां देवीं तन्मुखप्रशंसाव्याजेन प्रसादयतो हरस्यो-क्तिमवलम्ब्य द्वितीयां नान्दीमाह अरुणेति। हे सुतनु! शुभाङ्गि! अरुणे रक्ते नयने यत्र तादृशं भ्रूभङ्गेन सह वर्त्तमानं सभ्रूभङ्गं भ्रूकु-टिमदित्यर्थः, तथा दरम् ईषत् स्फुरितः कम्पितः अधरो यत्र तादृशं तव आननं शशिनः चन्द्रस्य कान्तिं शोभां क्लिष्टां करोतु तिरस्करोतु चन्द्रस्य रक्तनेत्रत्वादिगुणविरहेण त्वदाननसादृश्याभावादिति भावः मनस्विनि मानिनि! अनुनयैः प्रसादनैः कृतम् अलम्, अनुनयं ते न करोमीति भावः अयं कोपः मानः वर्द्धतां मानवर्ज्जने मुखस्य अरुण-नयनत्वादिना चारुत्वासिद्धयादिति भावः इति इत्थं गदितया सपरि-हासमुक्तयेत्यर्थः। देव्या गौर्य्या आश्लिष्टः प्रशंसया सद्योमानभञ्जनात् आलिङ्गितः शिवः वः युष्माकं शिवाय मङ्गलाय अस्तु भवतु। हरिणी-

अपिच

३. स्थिताः समाधिषु, मुखे गौर्य्या विलासोल्लसाः,
सम्भ्रान्ताः क्षणमुन्नताः, क्षणमथ स्मेरा निजे वैकृते।
क्रूराः कृष्टशरासने मनसिजे, दग्धे घृणाकूणिता
स्तत्कान्तारुदितेऽश्रुपूरतरलाः, शम्भोर्दृशः पान्तु वः॥ (घ)

---

वृत्तं न स म र स ल्गाः षड्वेदैर्हयैर्हरिणीमतेति तल्लक्षणात्। अत्र मानभङ्गोपायो रसान्तरं तदुक्तं दर्पणकारेण। साममेदोऽथ दानञ्च नत्युपेक्षे रसान्तरम्। तद्भङ्गाय पतिः कुर्य्यात् षडुपायानिति क्रमात्। रभसत्रासहर्षादेः कोपभ्रंशो रसान्तरमिति च। अत्र मुख-प्रशंसाजनितात् हर्षान्मानभङ्गो वेदितव्यः। अत्रोपमानचन्द्रात् उप-मेयस्य मुखस्य आधिक्याद्व्यतिरेकालङ्कारः। तदुक्तं दर्पणकारेण आधिक्यमुपमेयस्योपमानान्न्यूनतायवेति।

(घ) तृतीयां नान्दीमाह आनन्देति। समाधिषु योगधारणासु आनन्देन ब्रह्मसाक्षात्कारजनितेनेति भावः। स्थिताः अर्द्धसङ्कोचिताः गौर्य्याः पार्वत्या मुखे विलासेन उल्लसन्तीति तथोक्ताः निजे स्वकीये वैकृते विकृतिभावे क्षणं सम्भ्रान्ताः कथमेतत् कृतं लोकाः किं मां वक्ष्य-न्तीति चकिताः, क्षणम् उन्नताः विकृतिभावप्रकटनाय ऊर्द्धनिहिता इत्यर्थः क्षणञ्च स्मेराः हसन्त्यः विकासं गता इत्यर्थः, कृष्टं शरासनं धनुः येन तादृशे प्रहारार्थमुद्यते इति भावः मनसिजे कामे क्रूराः कोपकलुषितत्वात् निष्ठुरा इत्यर्थः, दग्धे भस्मीकृते मनसिजे घृणया दयया आकूणिताः किमेतन्मया कृतमिति सङ्कोचिताः तया तस्य कान्तया रत्या इत्यर्थः रुदिते पतिविनाशजनिते इति भावः अश्रुपूर-तरलाः वाष्पवारिवर्षिण्य इत्यर्थः दययेति भावः शम्भोः हरस्य दृशः नेत्राणि वः युष्मान् पान्तु रक्षन्तु। शार्दूलविक्रीड़ितं वृत्तं सूर्य्याश्वै-

नाद्यन्ते सूत्रधारः ॥ अलमतिविस्तरेण, आदिष्टोऽस्मि(ङ) दुष्टामात्य बुद्धि-वागुराऽलङ्घ्य-सिंह-रंहसा भ्रूभङ्ग-लीला-समुद्धृता-शेष-कण्टकेन समर-सागरान्तर्भ्रमद्भुजदण्ड-मन्दराकृष्ट-लक्ष्मी-स्वयंवर-प्रणयिना श्रीमहीपालदेवेन। यस्येमां पुराविदः प्रशस्ति-गाथामुदाहरन्ति।

'यः संश्रित्य प्रकृतिगहनामार्य्यचाणक्य-नीतिं,

जित्वा नन्दान्, कुसुमनगरं चन्द्रगुप्तो जिगाय।

---

यदि मः सजौ सतत गाः शार्दूलविक्रीडितमिति तल्लक्षणात्। अत्र विशेषणानां साभिप्रायत्वात् परिकरालङ्कारः तदुक्तम् उक्तिर्विशेषणैः साभिप्रायैः परिकरो मत इति।

(ङ) आदिष्ट इति। आदिष्टः आज्ञप्तः। दुष्टानाम् असताम् अमात्यानां मन्त्रिणां बुद्धिरेव वागुरा कूटयन्त्रं तया अलङ्घ्यः अनतिक्रमणीयः दुर्मन्त्रिभिरपथं नेतुमशक्य इति भावः स चासौ सिंहरंहा सिंहविक्रान्तश्चेति तथोक्तेन। भ्रूभङ्गलीलया समुद्धृतम् उन्मूलितम् अशेषं कण्टकं क्षुद्रशत्रुर्येन तादृशेन। समरः संग्राम एव सागरः तस्य अन्तः मध्ये भ्रमन् यः भुजदण्डः, स एव मन्दरः तदाख्यपर्वत-भेदः येन प्राक् समुद्रो मथित इति भावः तेन आकृष्टा बलादानीता या लक्ष्मीः रिपूणां श्रीरित्यर्थः तस्याः स्वयंवरे प्रणयी तेन। प्रशस्ति गाथां प्रशंसासूचिकां गीतिमित्यर्थः।

(च) य इति यः चन्द्रगुप्तः प्रकृत्या स्वभावेन गहनां निविड़ां दुर्बोधामित्यर्थः आर्य्यस्य मान्यवरस्य चाणक्यस्य नीतिं कौशलमित्यर्थः संश्रित्य अवलम्ब्य नन्दान् योगानन्दप्रभृतीन् नव नन्दवंशीयान् जित्वा कुसुमपुरं तदाख्यं पाटलिपुत्रस्य नन्दनगरं जिगाय अधीनीचकारे-त्यर्थः, अद्य इदानीं सः चन्द्रगुप्त एव दोर्दर्पाढ्यः बाहुबलदर्पितः सन् पुनः कर्णाटत्वं कर्णाटदेशाधिपत्यमित्यर्थः उपगतान् प्राप्तान् तानेव

कर्णाटत्वं ध्रुवमुपगतानद्य तानेव हन्तुं,
दोर्दर्पाढ्यः स पुनरभवच्छ्रीमहीपालदेवः' ॥ (च)

प्रविश्य पारिपार्श्विकः॥ अज्ज ! किं उण तेण राइणा समादिट्ठम् (१)।

सूत्र०॥ इदमादिष्टम्, यथा, किल विजयप्रकोष्ठ(छ)प्रणप्तुः कवेरार्य्य-क्षेमीश्वरस्य कृतिरभिनवं चण्डकौशिकं नाम नाटकं नाटयितव्यम्। स किल कविर्नाट्यवेद-विशारदान् विद्याकलाविदो लोकज्ञान् सभासदः प्रति एवमुक्तवान्।
'दृष्टं किमपि लोकेऽस्मिन् न निर्दोषं न निर्गुणम्।
आवृणुध्वमतो दोषान्, विवृणुध्वं गुणान् बुधाः!' ॥ (ज)

---

(१) आर्य्य! किं पुनस्तेन राज्ञा समादिष्टम् ?।

---

नन्दान् हन्तुं ध्रुवं निश्चितं श्रीमहीपालदेवः अभवत्। नन्दाश्चन्द्रगुप्तनिहताः कर्णाटदेशेषु जाताः तदाधिपत्यं प्राप्तत्वे पुनश्चन्द्रगुप्तेन श्रीमहीपालाख्यया जातेन पुनर्निहता इति प्राक्तनी प्रसिद्धिरिति भावः। मन्दाक्रान्तावृत्तं मन्दाक्रान्ताम्बुधिरसनगैर्मो भनौ तौ गयुग्ममिति तल्लक्षणात्।

(छ) विजयेति। विजयप्रकोष्ठस्य प्रणप्तुः प्रपौत्रस्य। चण्डकौशिकं चण्डः उग्रः कौशिकः कुशिकनन्दनः विश्वामित्र इत्यर्थः यत्र तन्नाम। नाट्येति नाट्यवेदे नटविद्यायां विशारदान् विचक्षणान् विद्याकलाविदः विद्याः शास्त्राणि कलाश्च चतुःषष्टिप्रकारा नृत्यगीतादयः ताः विदन्तीति तादृशान् लोकज्ञान् व्यवहाराभिज्ञान् सभासदः सामाजिकान्।

(ज) दृष्टमिति। हे बुधाः! विद्वांसः! अस्मिन् लोके जगति किमपि वस्तु निर्दोषं दोषरहितं न निर्गुणं गुणवर्जितञ्च न दृष्टं सर्व-

तत् पारिपार्श्विक ! किमिति नारभ्यसि कुशीलवैः सह सङ्गीतम्

पारि० ॥ सशङ्कमधोमुखं स्थित्वा ॥ सुणादु अज्जो, तदा गह्णोवराए जस्स दिअवरस्स अज्जेण दक्खिणा पड़िस्सादा, सो दाणिं तण्णिमित्तं पड़िकुविदो त्ति, सअलोज्जेव कुशीलवजणो पज्जाउलो (२)

सूत्र० ॥ भयमभिनीय, चिन्तां नाटयित्वा, सहर्षम् ॥ मारिष ! अलमत्र पर्य्याकुलतया। अयमहमिदानीम्,

दद्‌ामि पालयन् सत्यं ब्राह्मणाय प्रतिश्रुतम्।
हरिश्चन्द्र इवाद्यैव पुत्त्रदारात्म-विक्रयात् ॥ (झ)

---

(२) शृणोत्वार्य्यः, तदा ग्रहोपरागे यस्य द्विजवरस्यार्य्येण दक्षिणा प्रतिज्ञाता, स इदानीं तन्निमित्तं परिकुपित इति सकल एव कुशीलवजनः पर्य्याकुलः।

---

स्मिन्नेव वस्तुनि गुणा दोषाश्च वर्त्तन्ते इति भावः, अतः अस्मात् कारणात् दोषान् मत्प्रणीतनाटकस्येति भावः आहणुध्वम् आच्छादयध्वं तथा गुणान् विहणुध्वं प्रकाशयतेत्यर्थः न हि विद्वद्भिर्दोषो गृह्यते प्रत्युत गुण एव हंसैः क्षीरमिवाम्भस इति भावः। शृणोत्विति ग्रहस्य राहोः उपयहे ग्रासे ग्रहणसमये इत्यर्थः ग्रहाणां दुष्टानां रव्यादीनाम् उपरागे प्रातिकूल्यभावे इति सन्दर्भनायकविषयो ध्वनिः। द्विजवरस्य ब्राह्मणस्य विश्वामित्रस्येति ध्वनिः। कुशीलवजनः नटवर्गः राजकीयलोक इति ध्वनिः। पर्य्याकुलः सर्वथा व्याकुल इत्यर्थः।

(झ) ददामीति। प्रतिश्रुतं प्रतिज्ञातं सत्यं पालयन् अनुसरन् हरिश्चन्द्र इव अद्य पुत्रदारात्मविक्रयात् पुत्रं दारान् आत्मानञ्च विक्रीयेत्यर्थः ल्यबर्थे पञ्चमी। ब्राह्मणाय ददामि दक्षिणामिति शेषः।

नेपथ्ये ॥ एदु एदु पिअवअस्सो (२)।

सूत्र० ॥ नेपथ्याभिमुखमवलोक्य ॥ अये! कथमसौ देवो हरिश्चन्द्रो महोत्पात(ञ)-सूचितानामापदां कुशल-परिणामाय प्रारब्धविविध-विधि-विस्तरेण पुरोधसा निभृतोपदिष्ट-नियमजागरावसान-दुर्मना: प्रियवयस्य-बोधायनोपदिश्यमान-वर्त्मा शुद्धान्तमभिप्रस्थित एव। य एषः

निद्राविधेयारुण-मन्थराक्षः
प्रजागर-क्षाम-मुखाम्बुजश्रीः।

---

(२) एतु एतु प्रियवयस्यः।

---

पथ्यावक्त्रं वृत्तं युजोश्चतुर्थतो येन पथ्यावक्त्रं प्रकीर्त्तितमिति लक्षणात्।

(ञ) महोत्पातेति। महद्भिः उत्पातैः उल्कापातादिभिः सूचितानाम् अनुमितानाम् आपदां भाविनीनां विपदां कुशलपरिणामाय शान्तिविधानाय प्रारब्धः प्रक्रान्तः विविधः बहुविधः विधीनां स्वस्त्ययनानां विस्तरः बाहुल्यं येन तादृशेन पुरोधसा पुरोहितेन निभृतं गुप्तं यथा तथा उपदिष्टः यः नियमः व्रतपालनं जागरश्च तयोरवसाने समापने दुर्मनाः विकृतमनाः किमनभिमतमापतेदिति पर्य्याकुलमना इत्यर्थः।

(ट) निद्रेति। निद्राया विधेये वशं गते अरुणे रक्ते मन्थरे अलसे अक्षिणी यस्य तथोक्तः, तथा प्रजागरेण क्षामा क्षीणा मुखं अम्बुजमिव तस्य श्रीः यस्य तादृशः दिनान्ते स्वयूथात् करिणीवृन्दात् भ्रष्टः अतएव सद्यः वियोगेन विच्छेदेन व्यथितः उषसि प्रभाते नाग इव हिमेन्द्र इव विभातीति शेषः। उपजातिवृत्तं स्यादिन्द्रवज्रा यदि तौ जगौ ग इति उपेन्द्रवज्रा प्रथमे लघौ सेति अनन्तरोदीरित-

सद्योवियोग-व्यथितो दिनान्ते
भ्रष्टः स्वयूथादुषसीव नागः ॥ ( ८ )

तदेहि तत्रैव गच्छावः ।

इति निष्क्रान्तौ ।

प्रस्तावना । (ठ)

॥ ततः प्रविशति प्रजागर-खेदं नाटयन् राजा विदूषकश्च ॥

विदूषकः ॥ भो वअस्स ! पजागरमन्थरेहिं लोयणेहिं दरुग्गिरमुहो विअ कुम्मो उम्मेसनिमेसाइं करेन्तोवि मग्गं अणवेक्खन्तो अन्धमूसओ विअ इदो तदो परिब्भमसि ?(४)

---

(४) भो वयस्य ! प्रजागर-मन्थराभ्यां लोचनाभ्यां दरोद्गीर्णमुख इव कूर्म उन्मेष-निमेषान् कुर्वन्नपि मार्गमनवेक्षमाणोऽन्ध-मूषक इव इतस्ततः परिभ्रमसि ।

---

लक्ष्मभाजो मादौ यदीयावुपजातयस्ता इति च लक्षणात् । उपमालङ्कारः ।

(ठ) प्रस्तावनेति ।. नटीप्रभृतीनां सूत्रधारेण सह प्रस्तुतार्थाक्षेपकं मिथो भाषणं प्रस्तावना तदुक्तं दर्पणकारेण । नटी विदूषको वापि पारिपार्श्विक एव वा । सूत्रधारेण सहिताः संलापं यत्र कुर्वते । चित्रैर्वाक्यैः स्वकार्य्योत्थैः प्रस्तुताक्षेपिभिर्मिथः । आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनापि सेति । साचात्र अवलगिताख्या तदुक्तं तेनैव यत्रैकत्र समावेशात् कार्य्यमन्यत् प्रसाध्यते । प्रयोगे खलु तत् ज्ञेयं नाम्नावलगितं बुधैरिति । प्रजागरेति प्रजागरेण मन्थराभ्याम् अलसाभ्यां दरम् ईषत् उद्गीर्णं प्रकटितं मुखं येन तादृश इव कूर्मः कमठः अनवेक्षमाणः अपश्यन् ।

राजा ॥ वयस्य ! निद्रा हि नाम प्राणिनां प्रथममिदं (ड) शरीर-धारण-निमित्तम् । कुतः,

चित्तं प्रसादयति; लाघवमादधाति
प्रत्यङ्गमुज्ज्वलयति प्रतिभाविशेषम् ।
दोषानुदस्यति करोति च धातुसाम्यम्,
आनन्दमर्पयति योगविशेष-गम्यम् ॥ (ढ)

तत्समापीदानीं पश्य,

निद्रालसं भङ्गमुपैति गात्रं, खेदातिभारस्तिमितं मनश्च ।
मुहुर्मुहुर्वक्त्रमुपैति जृम्भा, बालातपालोकसहा न दृष्टिः॥(ण

---

(ड) प्रथममिति । प्रथमं मुख्यं शरीरधारणस्य निमित्तं कारणम् ।

(ढ) चित्तमिति । निद्रेति सर्वत्र कर्तृपदमध्याहार्यम् । चित्तं मनः प्रसादयति प्रसन्नं करोति । प्रत्यङ्गं लाघवम् आदधाति जनयति, प्रतिभाविशेषं बुद्धिनैर्मल्यविशेषमुज्ज्वलयति उत्तेजयति, दोषान् शारीरान्-मानसांश्च उदस्यति निरस्यति, धातूनां रसरक्तादीनां साम्यं ह्रासे पूरणं वृद्धौ ह्रासमित्यर्थः करोति । तथा योगविशेषेण धारणाविशेषेण गम्यं वेद्यम् आनन्दम् अर्पयति ददाति । वसन्ततिलकं वृत्तं श्लेयं वसन्ततिलकं तभजा जगौ गः इति तल्लक्षणात् । अत्रानेकासु क्रियासु एककारकान्वयात् दीपकालङ्कारः तदुक्तं दर्पणकारेण अप्रस्तुतप्रस्तुतयोर्दीपकन्तु निगद्यते । अथ कारकमेकं स्यादनेकासु क्रियासु चेदिति ।

(ण) निद्रेति । निद्रया अलसं गात्रं भङ्गम् उपैति प्राप्नोति । मनश्च खेदातिभारेण क्लान्त्यतिशयेन स्तिमितं निश्चलं व्यापारविमुखमिति भावः । वक्त्रं मुखं मुहुर्मुहुः पुनःपुनः जृम्भाम् उपैति । दृष्टिश्च न बालातपस्य अभिनवसूर्य्यकिरणस्य आलोकं सहते इति तथोक्ता । उपजातिवृत्तम् ।

विचिन्त्य सविस्मयम् ॥ कः पुनरद्य निशाप्रजागरमादिशतो(त) भगवतः कुलपतेरभिप्रायः संवृत्तः ; अथवा न विचारमर्हन्ति गुरुशासनानि ।

विदू० ॥ भो वअस्स ! अहं उण चिन्तअन्तो, (थ) वासकसज्जाए देवीए खण्डणाणत्थादो अण्णं ण किम्पि पेक्खामि ॥ (५)

राजा ॥ वयस्य ! अलं परिहासेन ।

विदू० ॥ भो ! तव उण एसो परिहासो, मम उण अणाह-बडुअस्स अणत्थो जेव्व (६) ।

राजा ॥ सोत्कण्ठं आशङ्कां नाटयित्वा ॥ वयस्य ! कथं पुनरवगच्छसि किं प्रतिपत्स्यते देवीति ?

---

(५) भो वयस्य ! अहं पुनश्चिन्तयन् वासकसज्जाया देव्याः खण्डनानर्थादन्यन्न किमपि प्रेक्षे ।

(६) भो ! तव पुनरेष परिहासः, मम पुनरनाथ-बटुकस्यानर्थ एव ।

---

(त) निशेति । निशाप्रजागरं रात्रिजागरणम् आदिशतः कर्त्तुमाज्ञापयतः । कुलपतेः आचार्य्यस्येति भावः कुलपतिलक्षणं यथा मुनीनां दशसाहस्रं योऽन्नदानादिपोषणात् । अध्यापयति विप्रर्षिः स वै कुलपतिः स्मृत इति । अभिप्रायः आशयः । अथवेति गुरुशासनानि गुरूणामाज्ञाः अविचारणीया हि गुरूणामाज्ञेति भावः ।

(थ) वासकसज्जाया इति । वासकसज्जालक्षणमुक्तं दर्पणकारेण । कुरुते मण्डनं यस्याः सज्जिते वासवेश्मनि । सातु वासकसज्जा स्याद् विदितप्रियसङ्गमेति । खण्डनानर्थादिति खण्डनं प्रतारणं तदेवानर्थः अनिष्टं तस्मात् अन्य कमपि अभिप्रायमिति शेषः । प्रतिपत्स्यते आचरिष्यति ।

विदू० ॥ परिकुविदेत्ति तक्केमि । (७)

राजा ॥ एवमेतत् कः सन्देहः, नाल्पमिदं कोपकारणं देव्याः । तथाहि,

किं रुद्धः सचिवैरथ प्रणयिनां गोष्ठीरसेनाहृतः ?
किं वा कामपि वल्लभामभिसृतो धूर्त्तोऽद्य नायात्यसौ ? ।
इत्थं कोप-कषाय-लोचन-गलद्-वाष्पाम्बु-धौताननं
निश्वस्य प्रियया शठे मयि तया किं किं न सम्भावितम् ॥(द)

अपिच

लीला-सम्भृत-मण्डनोत्सुकतया नीतः प्रदोषस्तया,
मन्मार्गार्पित-नेत्रया च गमितो यामस्तथैवापरः ।
नायातः शठ इत्युदस्य विकलं व्याधूय भूषाविधिं,
शय्योपान्त-विवर्त्तनैरथ निशाशेषः कथं यापितः ॥(ध)

---

(७) परिकुपिता इति तर्कयामि ।

---

(द) किमिति । सचिवैः मन्त्रिभिः किं रुद्धः ? । कार्य्यगौरवादिति भावः, अथ वा प्रणयिनां सुहृदां गोष्ठीरसेन समाजानुरागेण आहृतः आवद्धः ? किंवा धूर्त्तः असौ अद्य कामपि वल्लभां कान्ताम् अभिसृतः अभिगतः, अस्मात् न आयाति ? तया प्रियया कान्तया निःश्वस्य कोपेन कषायाभ्यां कलुषिताभ्यां लोचनाभ्यां नेत्राभ्यां गलद्भिः पतद्भिः वाष्पाम्बुभिः अश्रुभिः धौतं क्षालितम् आननं यस्मिन् तत् यथा तथा शठे धूर्त्ते मयि इत्थं किं किं न सम्भावितम् ? सर्वमेव सम्भावितमित्यर्थः । शार्दूलविक्रीड़ितं वृत्तम् ।

(ध) लीलेति । तया कान्तया लीलया विलासेन सम्भृतेषु समाहृतेषु मण्डलेषु अलङ्करणेषु उत्सुकतया कौतुकितया प्रदोषः रजनी-

चिन्तां नाटयित्वा ॥ अहह ! नूनमसौ नतभ्रुः,

अभिपतति जने मदागमाशा-

विहित-वृथोद्गम-सम्भ्रमा तदानीम् ।

कृत-निभृत-परस्पर-स्मितासु

स्थगितसुखीषु सखीषु नम्रमासीत् ॥ (न)

विदू० ॥ सहासम् ॥ भो वअस्स ! किं तुमं अदिक्कन्तमनुसोचअन्तो अत्ताणं आआसेसि, ता एहि, तहिं ज्जेव गदुअ देवीं पसादेह्म ( ८ )

---

(८) भो वयस्य ! किं त्वमतिक्रान्तमनुशोचन्नात्मानमायासयसि, तदेहि तत्रैव गत्वा देवीं प्रसादयावः ।

---

सुखं प्रथमो याम इत्यर्थः नीतः यापितः, तया मम मार्गे पथि अर्पिते नेत्रे यया तथाभूतया अपरः द्वितीयो यामः प्रहरः गमितः, अथ अनन्तरं शठोऽसौ न आयातः इति उदश्रु सजलनेत्रं विकलं सक्षोभं विविच्येति शेषः भूषाविधिं प्रसाधनव्यापारं विधूय विहाय शय्यायाः उपान्तेषु प्रान्तेषु विवर्त्तनैः लुण्ठनैः कथं केन प्रकारेण निशाशेषः अवशिष्टा रात्रिरित्यर्थः यापितः ? शार्दूलविक्रीडितं वृत्तम् ।

(न) अभिपततीति । तदानीं रजन्याः प्रथमे वा द्वितीये यामे इति भावः जने कस्मिंश्चिदपीति शेषः अभिपतति आगच्छति सति मम आगमस्य अभ्यागमनस्य आशया शङ्कया बोधेनेति यावत् विहितः कृतः वृथा निरर्थकः उद्गमः सम्भ्रमः मदभ्यर्थनार्थम् उत्थानावेगः यया तादृशी अतएव कृतं निभृतं निःशब्दं परस्परस्मितं याभिः राजमहिष्या भयात् स्मितस्य निभृतत्वमिति भावः तथोक्तासु अतएव स्थगितम् आच्छादितं सुखं याभिः तथाभूतासु सखीषु सतीषु नम्रम् अधोमुखं यथा तथा आसीत् तस्याविल्यर्थः ।

राजा ॥ सश्लाघम् ॥ सम्यगाह भवान्, तदेहि, तत्रैव गच्छावः।

॥ इति परिक्रामतः ॥

राजा ॥ सखेदम् निःश्वस्य ॥ इदानीं भ्रष्टावसरस्य (प) खेदकारणं गमनम्।

तथाहि

विच्छिन्नामनुबध्नती मम कथां, मन्मार्ग-दत्तेक्षणा,
मन्वाना सुमुखी चलत्यपि तृणे मामागतं सा मया।
नाश्लिष्टा यदलक्षितेन निभृतं पश्चादुपेत्यादरात्,
यन्नास्या नव-नील-नीरज-निभे रुद्धे कराभ्यां दृशौ ॥ (फ)

विदू० ॥ परिक्रम्य नेपथ्याभिमुखमवलोक्य, सश्लाघम् ॥ भो वअस्स! पेक्ख पेक्ख, एसा क्खु देवी (ब)उवणीद-पसाहणो-

---

(प) भ्रष्टेति। भ्रष्टः अतिक्रान्तः अवसरः समयः यस्य तथाभूतस्य समयमतिक्रामत इत्यर्थः गमनं खेदस्य दुःखस्य कारणं हेतुः।

(फ) विच्छिन्नामिति। यत् यतः अलक्षितेन अनवलोकितेन मया निभृतं निःशब्दं यथा तथा पश्चात् उपेत्य समीपमागत्य विच्छिन्नां विच्छेदं प्राप्तां मम कथाम् अनुबध्नती पुनःपुनर्योजयन्ती, मम मार्गे दत्तेक्षणा अर्पितदृष्टिः तथा तृणे चलति अपि मामागतं मन्वाना सम्भावयन्ती सा सुमुखी आदरात् न आश्लिष्टा नालिङ्गिता, तथा यत् यतः कराभ्यां हस्ताभ्याम् अस्याः कान्तायाः नवनीलनीरजनिभे नवीननीलोत्पलसदृशे दृशौ न रुद्धे आच्छादिते ततः भ्रष्टावसरस्येति पूर्वेणान्वयः। शार्दूलविक्रीडितं वृत्तम्।

(ब) उपनीतेति। उपनीतम् उपस्थापितं प्रसाधनस्य अलङ्करणस्य उपकरणं द्रव्यं यया तादृशी।

बअरणाए चारुमदीए सह किम्पि मन्तअन्ती उवविट्टा चिट्ठदि ( ९ )

राजा ॥ दृष्ट्वा सहर्षम् । अये ! कथम् ।

तन्वङ्ग्या शर-गौरयोः परिहृता पत्रावली गण्डयोः ?
कर्णान्तायतयोर्न वा मृगदृशा दत्तं दृशोरञ्जनम् ? ।
व्यालोला कबरी निसर्गकुटिला ? बिम्बाधरो धूसर-
श्चित्रं ! सैव तथापि कान्तिरनघा, दृष्टैव वा मण्डनम्॥(भ)

॥ ततः प्रविशति यथानिर्दिष्टा चिन्तां नाटयन्ती शैव्या चारुमती च ॥

चारुमती ॥ भट्टिणि ! एदं पसाहणोवअरणं (१० ) ॥

शैव्या ॥ सखेदं ॥ हञ्जे चारुमदीए ! अवणेहि एदं ; णिप्फल-पसाहणोवअरणासत्त हिअआए कित्तिअं दाणिं अप्पा परिभविदव्वो ( ११ )

---

(९) भो वयस्य ! पश्य पश्य, एषा खलु देवी उपनीत-प्रसाधनो-पकरणया चारुमत्या सह किमपि मन्त्रयमाणा उपविष्टा तिष्ठति ।

(१०) भट्टिनि ! एतत् प्रसाधनोपकरणम् ।

(११) हञ्जे चारुमतिके ! अपनय एतत्, निष्फलप्रसाधनोपकरणा-सक्त-हृदयया कियदिदानीम् आत्मा परिभावितव्यः ।

---

(भ) तन्वङ्ग्येति । तन्वङ्ग्या कृशाङ्ग्या मृगदृशा कान्तया शरगौ-रयोः शरस्तृणविशेषः तद्वत् गौरयोः गौरवर्णयोः गण्डयोः कपोलयोः पत्रावली पत्ररचनाश्रेणी परिहृता परित्यक्ता कर्णान्तायतयोः आकर्णविस्तृतयोः दृशोः नेत्रयोः अञ्जनं कज्जलं न वा दत्तं, निसर्ग-कुटिला स्वभावभङ्गुरा कबरी केशपाशः व्यालोला स्खलल्लम्बिनीत्यर्थः, न बद्धेति भावः, तथा बिम्बाधरः धूसरः न ताम्बूलरञ्जित इति भावः । चित्रम् आश्चर्यं तथापि एवमलङ्कृतत्वेऽपीत्यर्थः सैव अनघा अपापा

विदू० ॥ अहो से गरुओ (म)अहिणिवेसो (१२)।

राजा ॥ साधु, देवि ! साधु ; (य) परिभवस्थान एष ते प्रसाधनाभिनिवेशो निसर्गमधुराणामङ्गानाम् । तथाहि,

ताम्बूलरागोऽधरलोलुपो यद्,
यदञ्जनं लोचनचुम्बनोत्सुकम् ।
हारश्च कण्ठग्रहलालसो यत्,
स्वार्थः स तेषां, न तु भूषणं ते ॥ (र)

विदू० ॥ भो वअस्स ! उवसप्पह्म (१३)

राजा ॥ वयस्य ! इतोऽन्तर्हितौ (ल) शृणुवस्तावदस्य विश्रम्भजल्पितानि ॥ इति तथाऽवस्थितौ ॥

---

(१२) अहो ! अस्या गुरुकोऽभिनिवेशः ।

(१३) भो वयस्य ! उपसर्पावः ।

---

निर्मलेत्यर्थः कान्तिः लावण्यम्, या मण्डनम् अलङ्करणं इ्टीव मधु-राक्कतिरलङ्करणं नापेक्षते इति भावः । शार्दूलविक्रीडितं वृत्तम् ।

(म) अभिनिवेशः मनःक्षोभ इति यावत् ।

(य) परिभवेति । निसर्गमधुराणां स्वभावरम्याणाम् । प्रसाधनाभिवेशः अलङ्करणावेशः परिभवस्थाने अवहेलनपदे वर्त्तते इति शेषः रम्याण्यङ्गानि प्रसाधनं नाद्रियन्ते इति भावः ।

(र) ताम्बूलेति । ताम्बूलस्य रागः ताम्बूलचर्वणजनितं लौहित्यं यत् अधरलोलुपः अधरं प्रति लुब्धः, अञ्जनं यत् लोचनयोश्चुम्बने उत्-सुकं हारश्च यत् कण्ठग्रहे कण्ठालिङ्गने लालसः लोलुपः स तेषां ताम्बूलरागादीनां स्वार्थः निजप्रयोजनं ते तव भूषणम् अलङ्करणं न तु नैव, त्वं हि स्वेनैवालङ्क्रियते, अलङ्कारादीनान्तु त्वदङ्गाश्रयहेतुरिति भावः । उपजातिवृत्तम् ।

(ल) अन्तर्हितौ गुप्तस्थितौ ।

शैव्या ॥ निःश्वस्य सास्रम् ॥ हञ्जे चारुमदि! तधा समासासिअ अज्जउत्तो मं विप्पलम्भगोअरं (व) करेदित्ति, सव्वधा णमो णमो अवीससणीआणं अत्तणो भाअधेआणं (१४)।

राजा ॥ अयि मनस्विनि!

जलधरपटलान्तरिते यदि भानौ खण्डनं गता नलिनी।
तस्या न विप्रलम्भो, नोपालम्भोऽप्ययं भानोः ॥ (श)

चारु० ॥ भट्टिणि! अलं सन्ताविदेण, बहुवल्लहा क्खु राआणो (१५)।

---

(१४) हञ्जे चारुमति! तथा समाश्वास्य आर्यपुत्रो मां विप्रलम्भगोचरीं करोतीति सर्वथा नमो नमोऽविश्वसनीयानाम् आत्मनो भागधेयानाम्।

(१५) भट्टिनि! अलं सन्तापितेन, बहुवल्लभाः खलु राजानः।

---

(व) विप्रलम्भगोचरमिति। यत्र प्रकृष्टायामपि रतौ अभीष्टानाप्तिः स विप्रलम्भः यदाह दर्पणकारः। यत्र तु रतिः प्रकृष्टा नाभीष्टमुपैति विप्रलम्भोऽसावेति सचात्र मानात्मकः तदुक्तं तेनैव। स च पूर्वरागमानप्रवासकरुणात्मकश्चतुर्धा स्यादिति। तस्य गोचरां तदधीनामित्यर्थः मानवतीमिति यावत्। अविश्वसनीयेस्य इति भाग्यं न कदापि विश्वास्यं तेन कदा कस्य का दशा भवेदिति वक्तुमशक्यत्वादिति भावः। नम इति तस्य प्रातिकूल्यशान्त्यर्थमिति भावः।

(श) मनस्विनि मानिनि!। जलधरेति। भानौ भास्करे जलधरपटलान्तरिते मेघजालावृते सति नलिनी पद्मिनी यदि खण्डनं विच्छेदं गता स्यादिति शेषः तदा अयं तस्या नलिन्याः विप्रलम्भः

विदू० ॥ सरोषम् ॥ आः दासीए धीए ! णं बहुकज्जत्ति भणेहि, किं अलिओबालम्भ-गोअरं पिअवअस्सं करेसि ?(१६)

राजा ॥ वयस्य ! अलमत्र क्रोधेन ।

मानग्रन्थौ विधिज्ञाभिः सखीभिरुपबृंहिते ।
धन्याः प्रयान्ति कान्तानां मिथ्योपालम्भपात्रताम् ॥ (ष)

शैव्या ॥ रोदिति ॥

चारु० ॥ भट्टिणि ! समस्सस समस्सस, णं अदिमेत्तमहाणुभावदाए (स) तुए ज्जेव अदिभूमिं णीदो महाराओ ; ता जइ मं पुच्छसि, तदो, पलोअन्तोबि ण पलोइदव्वो, पिअं आलबन्तोबि चिरं उबालम्भेहिं खेदइदव्वो ( १७ )

---

(१६) आः दास्याः पुत्रि ! बहुकार्यां इति भण, किमलीकोपालम्भ-गोचरप्रियवयस्यं करोषि ?

(१७) भट्टिनि ! समाश्वसिहि समाश्वसिहि, ननु ! अतिमात्रमहानुभावतया त्वयैवातिभूमिं नीतो महाराजः, तद् यदि मां पृच्छसि, तदा, प्रलोकयन्नपि न प्रलोकयितव्यः, प्रियमालपन्नपि चिरमुपालम्भैः खेदयितव्यः ।

---

मानः न कार्य्य इति शेषः भानोरपि उपालम्भः तिरस्कारः न कार्य्य इति शेषः अनपराधित्वादिति भावः ।

(ष) मानग्रन्थाविति । विधिज्ञाभिः मानविधाननिपुणाभिः सखीभिः मानस्य ग्रन्थौ उपबृंहिते दृढीकृते इति यावत् धन्याः पुण्यवन्तः जनाः कान्तानां कामिनीनां मिथ्या य उपालम्भ तिरस्कारः तस्य पात्रतां गोचरत्वं प्रयान्ति प्राप्नुवन्ति ।

(स). अतिमात्रेति । अतिमात्रमहानुभावतया अत्यन्तसदाशयतया ।

शैव्या ॥ किंत्ति दे वअणं ण करिस्सं जइ दिट्टे अज्ज-उत्ते एदस्स दुट्ट-हिअअस्स पहविस्सं (ङ) ( १८ )

राजा ॥ सत्वरमुपसृत्य ॥ प्रिये !

मयि यस्याः प्रभावस्ते, हृदये मत्परायणे ।
त्वमात्मनो विशालाचि ! कथं न प्रभविष्यसि ॥ (च)

विदू० ॥ सोत्थि भोदीए ( १९ )

॥ उभे ससम्भ्रममुपतिष्ठतः ॥

शैव्या ॥ स्वगतम् ॥ कथं अज्जउत्तो ! भोदु एवं दाव ॥ प्रकाशम् ॥ जअदु जअदु अज्जउत्तो ( २० ) ।

---

(१८) किमिति ते वचनं न करिष्यामि, यदि दृष्टे आर्य्यपुत्रो एतस्य दुष्ट-हृदयस्य प्रभविष्यामि ।

(१९) स्वस्ति भवत्यै ।

(२०) कथमार्य्यपुत्रः ! भवतु एवं तावत् । जयतु जयतु आर्य्यपुत्रः ।

---

अतिभूमिम् अतिष्ठदिम् । अत्यादरात् लोको दुर्ललितो भवतीति भावः ।

(ङ) प्रभविष्यामीति । आर्य्यपुत्रदर्शने हृदयस्य प्रभुता मे न तिष्ठेत् येन हृदयं दृढ़ीकृत्य मानं रक्षामीति भावः ।

(च) मयीति । हे विशालाचि दीर्घनेत्रे ! यस्याः ते तव मयि प्रभावः प्रभुत्वम् अस्तीति शेषः सा त्वं मत्परायणे मदधीने आत्मनः हृदये कथं प्रभविष्यसि । अपि तु प्रभविष्यस्येव , अधीनजनाधीने वस्तुनि अधीनजनाधिपतेरेव प्रभुत्वस्य शास्त्रीयत्वात् तदुक्तं । भार्य्या पुत्रश्च दासश्च त्रय एवाधनाः स्मृताः । यत्ते समधिगच्छन्ति यस्यैते तस्य तद्धनमिति भावः ।

चारु० ॥ साशङ्कमात्मगतम् कथं महाराओ ? हद्धी ! हद्धी ! सुदं महाराएण जं मए मन्तिदं, भोदु एव्वं दाव ॥ प्रकाशम् ॥ जअदु जअदु महाराओ ॥ आसनमुपनीय ॥ एदं आसणं, एत्थ उपविसदु महाराओ (२१) ॥

॥ इति सर्व्वे उपविशन्ति ॥

राजा ॥ चिरं निर्व्वर्ण्य ॥ प्रिये ! नन्वियमिदानीन्ते, किमपाङ्ग-वलित तारा निवर्त्तते ? मयि वराङ्गि ! निपतन्ती । प्रातः सरोजगर्भे भ्रमरीव पिपासिता दृष्टिः ॥ (क)

अपिच तन्वङ्गि !

यद्यपि श्रियमाधत्ते भूषणानादरस्तव ।
तथाप्यन्तर्गतं मन्युमयं कथयतीव मे ॥ (ख)

---

(२१) कथं महाराजः ? हा धिक् ! हा धिक् ! श्रुतं महाराजेन यन्मया मन्त्रितम् । भवतु एवं तावत् । जयतु जयतु महाराजः । इदमासनम्, अत्रोपविशतु महाराजः ।

---

(क) किमिति । हे वराङ्गि सुन्दरि ! प्रातः प्रभाते सरोजगर्भे कमलाभ्यन्तरमभुनीति भावः पिपासिता भ्रमरीव पिपासिता सतृष्णा अतएव अपाङ्गयोर्वलिता चलिता तारा कनीनिका यस्याः तादृशी अपाङ्गविलोकिनीत्यर्थः । मयि निपतन्ती दृष्टिः कथं निवर्त्तते ? दृष्टापि दृष्टिं कथं न ददासीति भावः । भ्रमरीनिवृत्तिस्तु प्रातः सरोजानां निमीलनादिति बोध्यम् ।

(ख) यदीति । यद्यपि भूषणानां अलङ्काराणाम् अनादरः अपरिहरणमिति यावत् तव श्रियम् आधत्ते जनयति निसर्गसुन्दराङ्गानाम् अनलङ्करणमेव श्रीरिति भावः । तथापि अयं भूषणानादर इत्यर्थः मे मह्यम् अन्तर्गतं मन्युं दुःखं तवेति शेषः कथयति प्रकटयतीव ।

शैव्या ॥ सासूयमवलोक्य ॥ सुट्ठु सोहदि अज्जउत्तो इमेहिं णिद्दालसेहिं अङ्गेहिं, उज्जाअर-मन्थरेहिं सोण-लोअणेहिं अ (२२) ॥ इति कोपं नाटयति ॥

राजा ॥ चिरं निर्व्वर्ण्य सानुनयम् ॥ प्रिये ! प्रसीद, प्रसीद,

परिलुठति ललाटे भङ्गुरा भ्रू-लता किम्, ?

मदन-जय-पाताका-विभ्रमं बिभ्रतीयम् ? ।

स्फुरति च किमकाण्डे चण्डि ! बिम्बाधरोऽयम् ?

मृदु-पवन-विधूतोन्निद्र-बन्धूक-बन्धुः ? ॥ (ग)

---

(२२) सुष्ठु शोभते आर्य्यपुत्रः एभिर्निद्रालसैरङ्गैः, उज्जागर-मन्थराभ्यां शोण-लोचनाभ्याञ्च ।

---

(ग) परिलुठतीति । हे चण्डि ! अतिकोपने ! चण्डस्त्वत्यन्त-कोपन इत्यमरः भङ्गुरा कुटिला अतएव मदनस्य कामस्य जयपताकाया विभ्रमं विलासं विशिष्टां भ्रान्तिं वा बिभ्रती धारयन्ती जनयन्ती वा इयं भ्रूलता ललाटे भालदेशे किं कथं परिलुठति विचरति ? अयं मृदुना मन्देन पवनेन विधूतं कम्पितम् उन्निद्रं विकसितं यत् बन्धूकं तदाख्य-पुष्पविशेषः तस्य बन्धुः सखा तत्सदृश इत्यर्थः बिम्बाधरः बिम्बफल-सदृशो रदनच्छदः अकाण्डे सहसा किं कथं स्फुरति कम्पते च ? । कोपलक्षणं दृश्यते कथमिति भावः । मालिनीवृत्तं न न म य य युतेयं मालिनी भोगिलोकैरिति लक्षणात् । अत्र अन्यस्य धर्मं कथनन्यो वह-त्विति भ्रूलतायाः जयपताकाविभ्रमस्य धारणासम्भवेन उभयोर्बिम्ब-प्रतिबिम्बभावे पर्य्यवसानात् पूर्वार्द्धे असम्भवद्वस्तुसम्बन्धरूपा निदर्शना तदुक्तं दर्पणे सम्भवन् वस्तुसम्बन्धोऽसम्भवन् वापि कुत्रचित् । यत्र बिम्बानुबिम्बत्वं बोधयेत् सा निदर्शनेति । उत्तरार्द्धे तु अधरबन्धूकयोः

अञ्जलिं बद्धा ॥

चण्डि ! प्रसीद, परिकुप्यसि किं मुधैव,
नाहं तथा, ननु यथा परिशङ्कसे माम् ।
दण्डं वराङ्गि ! मयि धारय, यत् क्षमं ते,
मन्निर्णये कुलपतिर्भगवान् प्रमाणम् ॥ (घ)

प्रविश्य प्रतीहारी ॥ जअदु जअदु महाराओ; एसो कुलवदि-सआसादो तापसो पउत्तो (२३) ॥

राजा ॥ हेमप्रभे ! सादरमविलम्बं प्रवेशय ।

प्रती० ॥ जं महाराओ आणवेदि (२४) ॥ इति निष्क्रान्ता ॥

॥ ततः प्रविशति शान्त्युदकहस्तस्तापसः ॥

तापसः ॥ सविस्मयम् ॥ अहो नु खलु भोः !

---

(२३) जयतु जयतु महाराजः, एष कुलपतिसकाशात् तापसः प्राप्तः ।

(२४) यन्महाराज आज्ञापयति ।

---

साधर्म्यकीर्त्तनात् उपमा उभयोश्च परस्परमनपेक्षया स्थितेः संसृष्टिः तदुक्तं दर्पणे मिथोऽनपेक्षयैतेषां स्थितिः संसृष्टिरुच्यते इति ।

(घ) चण्डीति । हे चण्डि ! मानिनि ! प्रसीद प्रसन्ना भव, मुधैव अकारणमेव किं कथं परिकुप्यसि ? ननु वराङ्गि ! यथा मां परिशङ्कसे सम्भावयसि अहं तथा तादृशः न परस्त्रीकामुको नाहमिति भावः, ते तव यत् क्षमं उचितं तादृशं दण्डं दमनं मयि धारय कुरु, किन्तु भगवान् कुलपतिः आचार्य्यः मन्निर्णये मम दोषादोष निर्णये प्रमाणं अवलम्बनम् यदि कुलपतिर्मम दोषं कथयिष्यति तदा मयि दण्डः कार्य्य इति भावः । वसन्ततिलकं वृत्तम् ।

अपर्व्वण्येवेन्दोः किमयमुपरागः? कथमयं
दिशां दाहो घोरः? किमिति वसुधेयं प्रचलिता?।
छिनत्त्युल्कादण्डः किमिति सवितुर्मण्डलमहो?
महोत्पातोदर्कः क इव परिणामो हतविधेः?॥ (ङ)

अथवा गुरुभिरनुचिन्त्यमानं सर्व्वमेवैतत् कुशलपरिणामम्।

शान्तेः, स्वस्त्ययनात्, दानात्, विप्राणां स्वस्तिवाचनात्।
दुःस्वप्नोत्पात-शमनं, सतां चैवानुकीर्त्तनात्॥ (च)

अतएवाहं कुलपतिना भगवता प्रारब्धस्वस्त्ययनकर्म्मणः शेषभूतं सर्व्वोत्पात-प्रशमनं शान्त्युदकम् उपनेतुं राज्ञः शैव्यायाश्च सकाशं प्रहितः॥

---

(ङ) अपर्व्वणीति। महोत्पातवर्णनमिदम्। अपर्व्वणि पौर्णमासीव्यतिरिक्तेऽपि काले इत्यर्थः इन्दोश्चन्द्रस्य अयम् उपरागः ग्रहणं किम्? अयं दिशां घोरो भीषणः दाहः कथम्? इयं वसुधा पृथ्वी किमिति कथं प्रचलिता? भूकम्पः कथमित्यर्थः? उल्कादण्डः आकाशान्निष्पतन् दण्डाकृतिरालोकविशेष इत्यर्थः किमिति कथं छिनत्ति भङ्क्त्वेति निष्पतन्नेव निर्वाणं गच्छतीति भावः सवितुः सूर्य्यस्य मण्डलं परिवेश इत्यर्थः किमिति? अहो इति विस्मयसूचकमव्ययं हतविधेः दग्धदैवात् हेतोः महोत्पातानाम् एतेषाम् उदर्कः भाविफलरूपः उदर्कः फलमुत्तरमित्यमरः। परिणामः पर्य्यवसानं क इव भवितेति शेषः। शिखरिणीवृत्तं रसैरुद्रैश्छिन्ना य म न स भला गः शिखरिणीति तल्लक्षणात्।

(च) शान्तेरिति। शान्तेः दुरदृष्टप्रशमनानुष्ठानविशेषात् स्वस्त्ययनात् मङ्गलानुष्ठानात् दानात् पात्रेषु धनवितरणात् विप्राणां ब्राह्मणानां स्वस्तिवाचनात् स्वस्ति शुभं भूयादिति कथनात् सतां साधूनाम्

प्रविश्य प्रतिहारी ॥ एदु एदु भवं (२५) ॥

॥ इत्युपसर्पतः ॥

तापसः ॥ उपसृत्य ॥ राजन्! स्वस्ति भवते ।

राजा ॥ सपत्नीसमुत्थाय ॥ भगवन्! अभिवादये ।

शैव्या ॥ भअवं! पणमामि (२६) ॥

तापसः ॥ राजन्! विजयी भव; भवति! वीरप्रसूर्भूयाः ।

राजा ॥ ससम्भ्रमम् । आसनमासनम् ।

प्रती० ॥ आसनमुपनयति ॥

राजा ॥ इदमासनम्, अत्रोपविशतु भवान् ।

॥ इति सर्व्वे उपविशन्ति ॥

राजा ॥ हेमप्रभे! द्वार्य्यवहिता भव ।

प्रती० ॥ जं भवं आणवेदि (२७) ॥ इति निष्क्रान्ता ॥

तापसः ॥ राजन्! प्रतिगृह्यतामिदं भगवतः कुलपतेराशीर्भिरुपबृंहितप्रभावं (ङ) निशाप्रजागरान्ते सकलत्रस्य भवतोऽभिषेचनाय स्वस्त्ययनशेषं भगवताऽनुप्रेषितं शान्त्युदकम् ।

---

(२५) एतु एतु भवान् ।

(२६) भगवन्! प्रणमामि ।

(२७) यद्भवानाज्ञापयति ।

---

ष्वनुकीर्त्तनात् नामकथनाच्च दुःस्वप्नानाम् उत्पातानाञ्च शमनं निवृत्तिः स्यादिति शेषः ।

(ङ) उपबृंहितप्रभावं वर्द्धिततेजःप्रसरम् ।

राजा ॥ सहर्षं, अञ्जलिं बद्धा ॥ महान् प्रसादः ।

तापसः ॥

मन्त्रैः पूतं शमित-दुरितैः क्षत्रतेजोऽभिवृद्धै-
प्रारब्धस्य प्रशमनविधेरापदामुन्मुखीनाम् ।
एतत् पुण्यं किमपि परमं ते क्रियाशेषमम्भो-
भूयाद्भूत्यै, वितरतु मुदं व्यापदो हन्तु सर्व्वाः ॥ (ञ)

इत्यभिषिञ्चति ॥

राजा ॥ स्पर्शमभिनीय ॥ अये !

इदं तत् क्षत्रबीजस्य प्रसवाङ्कुरकारणम् ।
यस्य प्रसादादादित्यैर्नृपैरुच्चैर्धृतं शिरः ॥ (झ)

तापसः ॥ भवति शैव्ये ! त्वयापि भगवतः कुलपतेरादेशात् सविशेषमद्य प्रवर्त्तयितव्यो (ञ) गृहदेवतानां ब्राह्मणानाञ्च पूजासत्कारः ।

---

(ञ) मन्त्रैरिति । शमितं निराकृतं दुरितं पापं दुरदृष्टं वा यैः तादृशैः मन्त्रैः पूतं पवित्रीकृतं क्षत्रतेजसः क्षात्रप्रभावस्य अभिवृद्ध्यै वर्द्धनाय प्रारब्धस्य प्रक्रान्तस्य उन्मुखीनाम् आपतन्तीनां आपदां प्रशमनविधेः क्रियाशेषम् अनुष्ठानावशिष्टम् एतत् किमपि अनिर्वचनीयं परमं पुण्यं पवित्रम् अम्भः जलं भूत्यै मङ्गलाय भूयात् मुदम् आनन्दं वितरतु ददातु सर्वाः व्यापदः आपद्विशेषान् हन्तु नाशयतु च । शिखरिणीवृत्तम् ।

(झ) इदमिति । इदं शान्त्युदकं क्षत्रबीजस्य तत्प्रसिद्ध प्रसवाङ्कुरस्य कारणं यस्य अस्य प्रसादात् आदित्यैः सूर्यवंशीयैः नृपैः उच्चैः उन्नतं शिरः धृतम् ।

(ञ) प्रवर्त्तयितव्यः अनुष्ठातव्यः ।

शैव्या ॥ अञ्जलिं बद्ध्वा ॥ जं भवं आणवेदि (२८)।

तापसः ॥ राजन्! स्वस्ति भवते, अहमपि प्रारब्ध-विविध-विधिविस्तरं भगवन्तं कुलपतिमेव सम्भावयामि ॥

इति निष्क्रान्तः ॥

शैव्या ॥ सवैलक्ष्यम् अपवार्य्य ॥ हञ्जे चारुमदीए! भअवदा कुलवदिणा समादिट्टो अज्जउत्तस्स णिसापजाअरो, ता, दुज्जणीकिदह्मि इमिणा दुप्पच्चएण दुट्टहिअएण। भोदु, एव्वं दाव ॥ अञ्जलिं बद्ध्वा, प्रकाशम् ॥ पसीददु अज्जउत्तो (२९) ॥

राजा ॥ सानुरागम् ॥

ग्राह्यः प्रिये! यदि मयाऽनुनयस्तवायं
मिथ्यापराध-कलुषीकृत-चेतसापि।
आरोपयामि तव हारलतां सुकण्ठे
पत्रावलिं विरचयामि कपोलदेशे ॥ (ट)

---

(२८) यद् भवानाज्ञापयति ।

(२९) हञ्जे चारुमतिके! भगवता कुलपतिना समादिष्ट आर्य्य-पुत्रस्य निशाप्रजागरः, तद्दुर्जनीकृतास्मि अनेन दुष्प्रत्ययेन दुष्ट-हृदयेन। भवतु एवं तावत् ॥ प्रसीदतु आर्य्यपुत्रः।

---

(ट) ग्राह्य इति। हे प्रिये! मिथ्या यः अपराधः दोषारोप इत्यर्थः तेन कलुषीकृतं चेतो यस्य तादृशेनापि मया तव अयम् अनुनयः यदि ग्राह्यः, तदा तव सुकण्ठे शोभने कण्ठदेशे हारलतां त्वया मानिन्या परिहृतामिति भावः आरोपयामि अर्पयामि तथा कपोलदेशे पत्रावलिं विरचयामि। वसन्ततिलकं वृत्तम्।

शैव्या ॥ लज्जां नाटयति ॥

राजा ॥ नाट्येन तथा कुर्वन् ॥ प्रिये !

तव सपुलकस्वेदो गण्डः, करे मम वेपथु-

स्तदुभयविधिर्व्यर्थारम्भो, वृथैव मम श्रमः ।

अपि विनिहितः कण्ठे हारः स्तनाग्र-तरङ्गितो

मम करपरिष्वङ्ग-प्राप्तं न मुञ्चति वेपथुम् ॥ (ठ)

शैव्या ॥ अज्जउत्त ! भअवदा कुलवदिणा जधा आणत्तं, तधा अणुचिट्ठिदुं गमिस्सं (२०)

राजा ॥ देवि ! एवं क्रियताम् ।

इत्युभे निष्क्रान्ते ॥

राजा ॥ वयस्य ! कथं पुनरिदानीं सोत्कण्ठमात्मानं विनोदयामि ?

विदू० ॥ भो वअस्स ! तुमं देवी-सम्बद्धाए कधाए कीस

---

(२०) आर्य्यपुत्र ! भगवता कुलपतिना यथाज्ञप्तं तथा अनुष्ठातुं गमिष्यामि ।

---

(ठ) तवेति । तव गण्डः पुलकेन रोमाञ्चेन स्वेदेन घर्मजलेन च मत्स्पर्शजनितेनेति भावः सहितः, मम करे वेपथुः कम्पः त्वत्स्पर्शजनित इति भावः तथा कण्ठे विनिहितः अर्पितः स्तनाग्रे तरङ्गितः तरङ्गवत् आभासमानः हारश्च मम करपरिष्वङ्गप्राप्तं पाणिस्पर्शजनितं वेपथुं कम्पं न मुञ्चति न त्यजति तस्मात् उभयोरनयोर्हारयोजनपत्रावलीरचनयोर्विधिः व्यर्थारम्भः विफलोद्योगः, मम श्रमश्च एतदर्थ इति शेषः वृथैव । हरिणीवृत्तं न स म र सलागः षड्वेदैर्हयैर्हरिणीमतेति तल्लक्षणात् ।

ण अत्ताणअं विणोदेसि, अहं पि भोअण-कधाए अत्ताणअं विणोदइस्सं (२१)

प्रविश्य वनेचरः ॥ जअदु जअदु भट्टा; एसो क्खु, विअड़ (ङ) घोणग्ग-णिद्दलिद-मुत्थत्थली-लग्ग-परिमलुग्गार-सुरहि-णीसास-मारुद परिक्खित्त-तन्त-जन्त-न्तरद्दर-चक्खिज्जंत-पण्डर-कसेरु-कक्कर-च्छल-पइण्ण-पड़िवक्ख-जअ-विढत्त-णिअ-जसुक्कर-पूरिद-दस-दिसाविभाओ वरिसन्त-सिला-सारो विअ णव-जलहरो गरुअ-गव्व-गम्भीर-घुरुघुरासद्द-विद्दाविद-वण-सिंह णिअर--रवा-असणा-मरिस-उस्समिद-कस-सुत्तिपुड़मुव्वहन्तो विप्फुरन्त-गरुअ-रोसा-णल-सिहा-सन्दे-हिज्जन्त-तरलतर-जीहा-लदा-वित्थारो णिरन्तर-परिप्फुरन्त-वण-लग्ग-दावाणलु-ग्गार-भासुरो विअड़-तड़ि-

---

(२१) भो वयस्य! त्वं देवी-सम्बद्धया कथया कथं नात्मानं विनोदयसि, अहमपि भोजनकथया आत्मानं विनोदयिष्यामि।

---

(ङ) विकटेत्यादि विकटेन करालेन घोणाग्रेण मुखाग्रेण निर्दलिता चोदिता या मुस्तानां तृणविशेषाणां स्थली अकृत्रिमक्षेत्रं तस्याः लग्नः यः परिमलः विमर्द्दजनितो गन्धः तस्य उद्गारेण सुरभयः सौरभशालिनः ये निश्वासमारुताः तैः परिक्षिप्तानाम् इतस्ततो विक्षिप्तानां दन्तरूपयन्त्रान्तरे दरचर्व्यमाणानाम् ईषत् चर्व्यमाणानां पाण्डुराणां शुभ्राणां कसेरुकर्कराणां तदाख्यमूलविशेषचूर्णानां छलेन व्याजेन प्रकीर्णः इतस्ततो विक्षिप्तः यः प्रतिपक्षाणां शत्रूणां जयेन विढ़तः उपार्जितः निजयशसाम् उत्करः समूहः तेन पूरिता आच्छादिता दशदिशां विभागाः येन तथोक्तः अतएव वर्षन् गलन् शिलानाम् आसारः धारासम्पातः यस्मात् तथाभूतः शिलानिकरवर्षीत्यर्थः नवजल-

च्छडाकडार-केसर-सडा-कडप्पो णिसिद-करवाल-विमलेन्द-णील-कज्जल-तमाल-सामलो परिप्फुरन्त-पिङ्गच्छि-विच्छोहो, बहलमसी-मंसलो फुलिङ्गसेसो विअ दावाणलो दन्तन्तर-खण्डण-भअ-कुण्डलिज्जन्त-विसदण्ड-भासुर-विअड-दाढा-कराल-मुह-मण्डलो चिरआल-सङ्खडिद-वेराणुबन्ध-गरुअ-रोसु-ब्भड-कवलग्गह-विखण्डिद-चन्द-मण्डलु-

---

धर इव नवीनमेघ इव स्थित इत्यर्थः। गुरुकेति गुरुकेण महता गर्वेण गम्भीरः भीषणः यः घर्घरशब्दः तेन विद्रावितानां भयपलायितानां वनसिंहानां निकरस्य सङ्घस्य रवाकर्णनेन गर्जनश्रवणेन यः अमर्षः क्रोधः तेन उन्नमितम् उत्क्षिप्तं कर्णकूपं श्रुतिपुटम् उद्वहन् दधानः। विस्फुरदिति विस्फुरतः विशेषेण दीप्यमानस्य गुरुकस्य महतः रोषानलस्य क्रोधाग्नेः शिखया ज्वालया सन्दिह्यमानः संशयमापद्यमानः जिह्वा एव लता तस्या विस्तारः यस्य तादृशः। निरन्तरेति निरन्तरं परिस्फुरतो वनलग्नस्य काननलग्नस्य दावानलस्य य उद्गारः उदयः तद्वत् भास्वरः दीप्यमानः। विकटेति विकटा तीव्रा या तड़िच्छटा विद्युज्ज्वालाः तद्वत् कडाराः पिङ्गलाः केसरसटानां जटाविस्ताराणां कलापाः सङ्घाः यस्य तथाविधः। निशितेति निशितः शाणितः यः करवालः असिः, विमलं निर्मलं यत् इन्द्रनीलं नीलकान्तमणिरित्यर्थः, कज्जलं तमालश्च तद्वत् श्यामलः कृष्णोज्ज्वलकान्तिरित्यर्थः। परिस्फुरदिति परिस्फुरन् उज्ज्वलन् पिङ्गयोः पिङ्गलवर्णयोः अक्ष्णोर्नेत्रयोः विक्षेपः यस्य तथाभूतः। बहलेति बहला सान्द्रा या मसी तद्वत् मांसलः स्थूलकृष्णशरीर इत्यर्थः स्फुलिङ्गशेषः अग्निकणावशिष्टः। दन्तान्तरेति। दन्तान्तरे दंष्ट्रामध्ये यत् खण्डनं चर्वणमित्यर्थः तस्मात् भयेन कुण्डलायितः कुण्डलवत् सङ्कुचित इत्यर्थः यः विसदण्डः मृणालखण्डः तद्वत् भास्वरे दीप्यमाने ये विकटे

च्चरन्त-कला-जुअल-सोहा-सणाहो विअ पलअ-णिसा-तिमिर-सङ्घाओ ओदालिद-धरावलअ-लीला-समुत्थिदो विअ महावराहो उत्थिदो वराहजूधाधिवई मअव्वभूमिं ता एदं सुणिअ भट्टा पमाणं। अहं पि तहिं जेव्व गच्छामि (३२)

---

(३२) जयतु जयतु भट्टारकः, एष खलु, विकट-चोणाग्र-निर्दलित-कुलस्थली-लग्न-परिमलोद्गार-सुरभि-निश्वास-मारुत—परिक्षिप्त-दन्त-यन्त्रान्तर-दर-चर्व्यमाण-पाण्डुर-कसेरु—कर्क्कर—कर्ल-प्रकीर्ण-प्रतिपक्ष-जय-विधूत-निज-यश-उत्कर-पूरित-दशदिग्विभागः, वर्षच्छिलासार इव नव-जलधरः। गुरुक-गर्व-गम्भीर-घर्घर-शब्द-विद्रावित-वन-सिंह-निकर-रवाकर्णनामर्षोन्नमित-कर्ण-शुक्तिपुटसहकृत् विस्फुरद्गुरुक-रोषानल-शिखा-सन्दिह्यमान-तरलतर-जिह्वा-लताविस्तारः निरन्तर-परिस्फुरद्वन-लग्न-दावानलोद्गार-भास्वरः विकट-तडिच्छटा-कडार-केसर-सटा-कलापः

---

दंष्ट्रे ताभ्यां करालं भीषणं मुखमण्डलं यस्य तथाविधः। कतएव चिरेति। चिरकालेन सङ्घटितः सञ्चितः यः वैरानुबन्धः, शास्त्रवानुष्ठानं चन्द्र-तिमिरयोश्चिरवैरिता प्रसिद्धेति भावः तेन गुरुः महान् यः रोषः कोपः तेन उद्भटः उत्कटः यः कवलः ग्रासः स एव ग्रहः राहुरि-त्यर्थः तेन विखण्डितात् भक्षितात् चन्द्रमण्डलात् उच्चरत् उद्गच्छत् यत् कलायुगलं चान्द्रं कलाद्वयं तस्य शोभया सनाथः सहित इव प्रलयनिशायाः कल्पान्तरजन्याः तिमिराणां तमसां सङ्घातः समूहः। अवतारितेति। अवतारितं दंष्ट्राया अवरोपितं धरावलयं पृथ्वी-मण्डलं येन तथोक्तः सन् लीलार्थं क्रीडार्थं समुत्थितः महावराहः आदिवराह इव वराहयूथानामधिपतिः मृगयाभूमौ मृगयार्थं निर्दिष्टे भूते कानने उत्थितः उपस्थितः।

राजा ॥ सहर्षम् ॥ हन्त ! लब्धमिदानीं विनोदस्थानम्।
विदू० ॥ सरोषम् ॥ भो वअस्स ! अरख (ढ) चङ्कमण-कण्टअ-सअविमद्दण-समविसम-लङ्घण-बुभुक्खा-पिपासा-दोस-संकुलं बहु-पच्चवाअं जइ मअव्वं विणोअणोवाअं, ता किं उण दे आआसट्ठाणं भविस्सदि (२२)
राजा ॥ वयस्य ! मृगया हि नाम सृशमुपकारिणी राज्ञाम्।

---

निशित-करवाल-विमलेन्द्रनील-कज्जल-तमाल-श्यामलः परिस्फुरत्-पिङ्गाक्षिविक्षेपः बहल-मसी-मांसलः स्फुलिङ्गशेष इव दावानलः दन्तान्तर-खण्डन-भय-कुण्डलायित-विसदखण्ड-भासुर-विकट-दंष्ट्रा-कराल-मुख-मण्डलः चिरकाल-सङ्घटित-वैरानुबन्ध-गुरुरोषोद्भट-कवलग्रह-विखण्डित-चन्द्रमण्डलोच्चरत्कलायुगल-शोभा-सनाथ इव प्रलय-निशा-तिमिरसङ्घातः अवतारित-धरावलय-लीला-समुत्थित इव महावराह उत्थितो वराहयूथाधिपतिस्तं गव्यभूमिम्। तदिदं श्रुत्वा भर्त्ता प्रमाणम्। अहमपि तत्रैव गच्छामि।

(२२) भो वयस्य ! अरण्य-चङ्क्रमण-कण्टक-शर-विमर्द्दन-समविषम-लङ्घन-बुभुक्षा-पिपासा-दोष-सङ्कुलं बहुप्रत्यवायं यदि मृगव्यं विनोदनोपायः तत् किं पुनस्ते आयासस्थानं भविष्यति।

---

(ढ) अरण्येति। अरण्येषु वनेषु चङ्क्रमणं पुनःपुनरतिशयेन वा भ्रमणं कण्टकेषु शरवनेषु च विमर्दनं दलनं समविषमयोः उन्नतानतयोः स्थानयोः लङ्घनं बभुक्षा क्षुधा पिपासा तृष्णा च एतैर्दोषैः सङ्कुलं पूर्णं बहुप्रत्यवायं बहुपापकरं हिंसावशादिति भावः। आयासस्थानं दुःखस्थानम्।

तथाहि,

खिन्नं विनोदयति मानसमातनोति
स्थैर्यं चले, वपुषि लाघवमादधाति ।
उत्साहवृद्धि-जननीं रणकर्म्म-योग्यां
राज्ञां मुधैव मृगयां व्यसनं वदन्ति ॥ (ण)

तदेहि, तत्रैव गच्छाव: ।

॥ इति निष्क्रान्ताः सर्व्वे ॥

इति आर्य्य-क्षेमीश्वर-कृते चण्डकौशिक-नाटके
प्रथमोऽङ्कः ॥

---

## द्वितीयाङ्कः ।

नेपथ्ये ॥ भो वराहान्वेषिणः !

एष क्षुभ्नाति पङ्कं, दलति कमलिनीमत्ति मुन्द्रा प्ररोहान्,
आरान् मुस्तास्थलानि स्थपुटयति, जलान्युत्कसेतूनि याति ।

---

(ण) खिन्नमिति । खिन्नम् उद्विग्नं मानसं विनोदयति सन्तोषयति अन्यत्र मनोऽभिधानादिति भावः चले इतस्ततः प्रधाविते लक्ष्ये इति शेषः स्थैर्य्यं स्थिरसन्धानमातनोति शिक्षयति । वपुषि शरीरे लाघवम् आदधाति अर्पयति । तस्मात् राज्ञां रणकर्मयोग्यां सांग्रामिकव्यापारसदृशीम् उत्साहवृद्धिजननीं मृगयां मुधैव वृथैव व्यसनं दोषं वदन्ति बुधा इति शेषः व्यसनं विपदि भ्रंशे दोषे कामजकोपजे इत्यमरः । वसन्ततिलकं वृत्तम् । इति प्रथमाङ्कव्याख्या ।

(क) एष इति । एषः वराहः आरात् समीपे दूरे वा आराद्दूरसमीपयोरित्यमरः । पङ्कं क्षुभ्नाति निर्दलति, कमलिनीं पद्मिनीं

प्राप्तः प्राप्तः प्रविष्टो वनगहनमयं याति यातीति सैन्यैः
पश्चादन्विष्यमाणः प्रविशति विषमान् काननान्तान् वराहः(क)
तदवष्टभ्यतां (ख) समन्ताद्वनानि ।
आस्तीर्य्यन्तामुपान्ते वनवृति-निपुणैर्जालिकैर्जालबन्धाः,
मुच्यन्तां शृङ्खलाभ्यः श्वगणिभिरटवीगह्वरे सारमेयाः ।
आकीर्य्यन्तां स्थलानि श्रमशिथिलहयैः सादिभिः पाशहस्तैः,
व्याधूयन्तां कृतान्तैरिव महिषचरैर्दण्डिभिः काननानि ॥(ग)

---

दलति मर्दयति, गुन्द्राणां मुस्तानां प्ररोहान् अङ्कुरान् मुस्ता मुस्तक-मस्त्रियां स्यात् भद्रमुस्तको गुन्द्रेत्यमरः अत्ति भक्षयति, मुस्तास्थलानि मुस्तकपूर्णक्षेत्राणि स्थपुटयति स्थपुटानि विषमोन्नतानि करोति स्थपुटं विषमोन्नतमिति हेमचन्द्रः । भग्नाः विध्वस्ताः सेतवो येषां तादृशानि याति गच्छति सेतून् भंक्त्वा जलानि अवगाहते इत्यर्थः अयं प्राप्तः प्राप्तः प्रायेण अभिगत इत्यर्थः वनगहनं निविडारण्यं प्रविष्टः, याति याति इति सैन्यैः पश्चात् अन्विष्यमानः अनुधाव्य-मानः सन् विषमान् दुर्गमान् वनान्तान् अरण्यभागान् प्रविशति । स्रग्धरावृत्तम् ।

(ख) अवष्टभ्यताम् अवरुध्यताम् ।

(ग) आस्तीर्य्यन्तामिति । उपान्ते अरण्यप्रान्ते वनवृतिनिपुणैः काननावरोधदक्षैः जालिकैः जालबन्धाः कूटयन्त्राणि इत्यर्थः आस्ती-र्य्यन्ताम् आवध्यन्ताम् । श्वगणिभिः कुक्कुरगणवद्भिः व्याधैरिति शेषः सारमेयाः कुक्कुराः अटवीगह्वरे अरण्यविवरे शृङ्खलाभ्यः मु-च्यन्तां विशृङ्खलाः कृत्वा अरण्याभ्यन्तरे प्रेर्य्यन्तामित्यर्थः । पाशहस्तैः जालपाणिभिः सादिभिः अश्वारोहिभिः सैन्यैरिति शेषः श्रमेण शिथिला हयाः अश्वा येषां तथाभूतैः सद्भिः स्थलानि काननभूमय आकीर्य्यन्ताम् आक्रियन्ताम् । तथा दण्डिभिः लगुडकरैः कृतान्तै-

॥ ततः प्रविशति रौद्रोज्ज्वलवेशः सम्भ्रान्तो विघ्नराट् ॥

विघ्नराट् ॥ साशङ्कम् ॥

शम्भोः समाधिरपि येन कृतान्तरायो,
दक्षस्य चाध्वरविधिः, शिवयोश्च केलिः ।
सोऽहं जगत्त्रय-हित-व्यवसाय-सिद्धि-
विध्वंस-विभ्रम-परः परमोऽस्मि विघ्नः ॥ (घ)

तदहमिदानीम्,

विद्यात्रयं हरिहरात्मभुवामसाध्यम्
उग्रैस्तपोभिरिह साधयतो महर्षेः ।
क्रीड़ा-वराह-वपुरद्य समुद्धरामि,
लोकत्रयं हरिरिवादिवराहरूपः ॥ (ङ)

---

रिव शमनैरिव महिषचरैः महिषारूढैः सैन्यैः काननानि व्याधूयन्तीं कम्पयन्तीम् । स्रग्धरावृत्तम् ।

(घ) शम्भोरिति । येन मया शम्भोः हरस्य समाधिः एकाग्रतया योगसाधनमित्यर्थः अपि दक्षस्य प्रजापतेः अध्वरविधिः यज्ञविधानञ्च शिवयोः शिवा च शिवश्च तयोः पार्व्वतीपरमेश्वरयोरित्यर्थः केलिः त्रिभुवनविहारश्च कृतः अन्तरायः व्याघातः यस्य तथाभूतः, विघ्नित इत्यर्थः । जगतां त्रयस्य त्रिभुवनस्य यत् हितं तस्य व्यवसायः प्रयत्नः तस्य सिद्धेः निष्पत्तेः विध्वंसे खण्डने यः विभ्रमः विलासः आनन्द इत्यर्थः स एव परं प्रधानं यस्य तादृशः सः अहं परमः विघ्नः विघ्नराट् इत्यर्थः अस्मि भवामि । वसन्ततिलकं वृत्तम् ।

(ङ) विद्यात्रयमिति । अद्य अहं क्रीड़या वराहस्येव वपुः शरीरं यस्य तथाभूतः सन् आदिवराहरूपः हरिः विष्णुः लोकत्रयमिव त्रिजगतीमिव प्रलयमग्नामिति भावः इह अस्मिन् प्रदेशे उग्रैः कठोरैः तपोभिः हरिहरात्मभुवां विष्णुरुद्रब्रह्मणाम् अपिरसाध्याहार्यः अ-

पश्चादवलोक्य, सभयम् । अहो ! मे जगत्कल्याण-परिपन्थिनः (च) परपौरुषान्तराय-रसिकस्य अनपेक्षित-शरीराणि साहसानि । यतः, कृतान्त-दन्तान्तर-वर्त्तिनमात्मानं मन्यमानेन कथं कथमपि शरगोचरं परिहृत्य नीतस्तावदयं मया महाराज-हरिश्चन्द्र इममरण्योद्देशम् । तद् यावत्, विश्वामित्रस्याश्रममनु प्रापयामि । यतः, तेन किल तीव्र-तपसा चत्रिय-ब्राह्मणेन सर्गान्तर-प्रथम-प्रजापतिना त्रिशङ्कु-याजकेनोत्पत्ति-स्थिति-प्रलय-विधायिनीनां गुणत्रय-मयीनां विद्यानां सिद्धये, किमपि दुष्करमारब्धं वर्त्तते ।

---

साध्यं साधयितुमशक्यं विद्यात्रयं सृष्टिस्थितिप्रलयसाधनीमिति भावः साधयतो वशीकुर्वतो महर्षेः विश्वामित्रात् समुद्धरामि, आच्छिनद्मि महर्षेर्विद्यात्रयसाधने विघ्नं जनयामीति भावः । वसन्ततिलकं वृत्तम् । उपमालङ्कारः ।

(च) जगदिति । जगतां कल्याणस्य शुभस्य परिपन्थिनः प्रतिकूलस्य । परेति परेषां यत् पौरुषं पुरुषकारः प्रयत्न इत्यर्थः तस्य अन्तराये विध्वंसने रसिकस्य कुशलस्य । अनपेक्षितेति अनपेक्षितम् अगणितं शरीरं येषु तानि शरीरं नश्यतु वा नवेति अविमृश्य साहसानि मया कार्य्याणीति भावः । कृतान्तेति कृतान्तस्य यमस्य दन्तान्तरवर्त्तिनं दंष्ट्रामध्यस्थितम् आत्मानं मन्यमानेन सम्भावयतापि मया कथं कथमपि अतिकष्टेनापि शरगोचरं परिहृत्य वाणपथात् आत्मानम् अपनीयेत्यर्थः अयं महाराजो हरिश्चन्द्रः इमम् अरण्योद्देशं काननप्रदेशं नीतः प्रापितः । तीव्रेति तीव्रतपसा कठोरव्रतेन । सर्गेति सर्गः सृष्टिः अन्यः सर्गः सर्गान्तरं ब्रह्मसृष्टिभिन्ना सृष्टिरित्यर्थः तस्य प्रथमप्रजापतिना आदिदेवेन । त्रिशङ्कुयाजकेन त्रिशङ्कुर्नाम सूर्य्यवंशीयः राजविशेषः तस्य याजकेन तं सशरीरं स्वर्गं नेतुमिष्टवतेत्यर्थः । गुणत्रयमयीनां रजःसत्त्वतमोरूपाणाम् ।

तथाहि;

यतो धाता विश्वं सृजति, न हरिर्नापि च हरो,
हरिर्गोप्ता लोकानवति, न विरिञ्चिर्न च हरः।
यतः संहर्त्तासौ हरति हर एकस्त्रिभुवनं,
तदेकस्मिन् सिद्धिं व्रजति कथमन्यत्र निखिलम्?॥(छ)

विचिन्त्य॥ अथवा परमनैष्ठिकेऽस्मिन् (ज)किं न सम्भाव्यते, किन्तु सुलभ-कोपतया मुनिस्वभावानां कामक्रोधयोश्च श्रेयः परिपन्थिनीं वृत्तिमाश्रित्येदमुपक्रान्तम्, तन्न जाने, किमत्र फलिष्यतीति।

नेपथ्ये॥ गहनतर(झ)वनान्तर्धानगर्वित! तिष्ठ रे क्रोड़ाधम! तिष्ठ।

---

(छ) यत इति। यतः यस्मात् हेतोः धाता ब्रह्मा विश्वं जगत् सृजति उत्पादयति, हरिः विष्णुर्न, हरश्च न। तथा गोप्ता रक्षिता हरिः लोकान् जगन्ति अवति रक्षति, विरिञ्चिः ब्रह्मा न, हरश्च न। तथा संहर्त्ता असौ हरः एक एव त्रिभुवनं हरति नाशयति। तत् तस्मात् एकस्मिन् अन्यत्र अन्यस्मिन् ब्रह्मविष्णुहरव्यतिरिक्ते जने इत्यर्थः निखिलं समग्रं सृष्टिस्थितिप्रलयकर्त्तृत्वं कथं सिद्धिं व्रजति प्राप्नोति? नैव कदाचिदपि एतत् सिध्यतीति भावः। शिखरिणीवृत्तं रसै रुद्रैश्छिन्ना य म न स भलागः शिखरिणीति तल्लक्षणात्।

(ज) परमनैष्ठिके इति। परमोत्कर्षवतीत्यर्थः। श्रेयः परिपन्थिनीं मङ्गलविघ्नकारिणीम् इदं विद्यालयसाधनमित्यर्थः। यतः वशिष्ठं प्रति क्रोधपरतन्त्रेण तद्विद्वेषकामेन इदमारब्धं तस्मात् विघ्नासम्भवो नास्त्येवेति भावः।

(झ) गहनेति। गहनतरम् अतिनिविड़ं यत् वनं तत्र अन्तर्धानेन आत्मगोपनेन गर्वितः नाहं कस्यापि चक्षुर्गोचरतां गमिष्यामीति सञ्जातगर्वः तत्सम्बुद्धौ क्रोड़ाधम वराहापसद।

दूरं कुतूहलवशात् क्षण-दृष्ट-नष्ट !
मायामिवाश्रितवतापहृतस्त्वयाहम्।
पन्थानमेषि यदि मेऽद्य दृशोस्तदानीम्,
स्प्रक्ष्यसि दुष्ट ! न पुनर्नलिनीवनानि ॥ (ञ)

विघ्न० ॥ श्रुत्वा सहर्षम्। अये ! कथमासन्न एवायं, तद्यावदितो निर्गत्य तामेव मायामास्थाय (ट) दर्शयाम्यात्मानम् ॥ इति सत्वरं परिक्रम्य निष्क्रान्तः ॥

ततः प्रविशति गृहीत-शरासनोऽनुसरणं नाटयन्
रथस्थो राजा, सारथिश्च ॥

राजा ॥ पूर्वोक्तं पठित्वा, अग्रतोऽवलोक्य, सहर्षम् ॥ आर्य्य ! आर्य्य ! नातिदूरवर्त्तिना (ठ) भवितव्यम्। तथाहि, पश्य,

मृणालीभिः कीर्णा कवल-गलिताभिर्वनभुवः,
सरस्तीरे धाराः क्षुभित-जल निस्यन्दि पयसाम्।

---

(ञ) दूरमिति। रे दुष्ट ! कुतूहलवशात् कौतुकात् क्षणेन दृष्टः दृष्टिपथं गतः नष्टः अदर्शनं गतश्च तत्सम्बुद्धौ मायामिव आश्रितवता त्वया अहं दूरम् अपहृतः आनीतः। यदि अद्य मे मम दृशोः पन्थानम् एषि गच्छसि, तदानीं पुनः नलिनीवनानि न स्प्रक्ष्यसि न दलितुं शक्ष्योपि मृत्युमुखं पश्यसीति भावः। वसन्ततिलकं वृत्तम्।

(ट) मायामिति। वराहमूर्त्तिकामिति भावः।

(ठ) तेन वराहेणेत्यर्थः।

(ड) मृणालीभिरिति। कवलात् ग्रासात् गलिताभिः स्रस्ताभिः मृणालीभिः वनभुवः काननोद्देशाः कीर्णाः आच्छादिताः। क्षुभितेभ्यः विलोडितेभ्यः जलेभ्यः सरःस्थितेभ्य इति भावः। निस्यन्दिनां निःसृ-

अम्भोद्गीर्णैः फेनैः शवल-नवशष्पा स्थलभुवो,
घनास्तन्निश्वासैर्मरुत इह मुस्तासुरभयः ॥ (ड)

निपुणमवलोक्य, सहर्षम् ॥ आर्य्य ! आर्य्य ! अयमसौ, पश्य पश्य,

हेलावलितकन्धरः सरभस-प्रोत्खात-कन्दाङ्कुर-
व्यासक्ताकुल-लोल-नाल-नलिनं वक्त्रान्तराले वहन् ।
अन्तर्गूढ-विरूढ-नाभिनलिन-प्राप्तास्य-पङ्केरुहः
क्रीड़ाक्रोड़ इवोद्दिधीर्षति पुनर्दंष्ट्राग्रलग्नां भुवम् ॥ (ढ)

सानन्दम् ॥ कथमवलोक्य मामभिमुखमापतितः ॥

इति शरसन्धानं नाटयति ॥

---

तानामित्यर्थः प्रथमं जलानां धाराः सरसः तीरे वर्त्तन्ते इति शेषः । अनेन उद्गीर्णैः फेनैः स्थलभुवः वनोद्देशाः शवलानि चित्रितानि नवानि शष्पाणि नवतृणानि यासां तथाभूताः संवृत्ता इति शेषः । तथा इह वनोद्देशे मुस्तासुरभयः वराहदलितमुस्तागन्धशालिनः मरुतः वायवः तस्य वराहस्य निःश्वासैः घनाः मिश्रणात् सान्द्रा जाता इति शेषः । शिखरिणीवृत्तम् ।

(ढ) हेलेति । हेलया अवलीलया वलिता स्फुरिता कन्धरा ग्रीवा येन तादृशः, वक्त्रान्तराले मुखाभ्यन्तरे सरभसं सवेगं यथा तथा प्रोत्खाते समुद्धृते कन्दस्य मूलस्य अङ्कुरे व्यासक्तं लग्नम् आकुलं विध्वस्तं लोलं चञ्चलं नालं यस्य तादृशं नलिनं पद्मं वहन् । अन्तर्गूढं सुगुप्तं यथा तथा विरूढं जातं यत् नाभिनलिनं नाभिपद्मं येन प्राप्तम् आस्यं मुखमेव पङ्केरुहं पद्मं यस्य तथाभूतः क्रीड़ाक्रोड़ इव आदिवराह इव पुनर्दंष्ट्राग्रे लग्नां भुवं पृथिवीम् उद्दिधीर्षति उद्धर्त्तुमिच्छति । पुरा भगवान् नारायणः नाभिपद्मम् अन्तर्लीनं कृत्वा महावराहरूपेण धरित्रीमुज्जहार । अयमपि तथा कर्त्तुं प्रवृत्त इति भावः । प्राप्तास्य पङ्केरुह

सूतः ॥ सकौतुकमवलोक्य ॥ आयुष्मन् ! पश्य पश्य,

गर्वादेत्य पुनर्निवृत्य तरसा लक्षीकृतस्तत्क्षणं,
त्रासाकुञ्चितमायताग्रचरणः पश्चार्द्धमाकर्षयन् ।
श्वासोद्रेक-विदीर्ण-सृक्क-विवर-भ्रश्यन्मृणालाङ्कुरो
दंष्ट्रामर्पयतीव ते व्यपगत-व्रीड़ा-विलक्षाननः ॥ (ण)

राजा ॥ बाणमोक्षणं नाटयन्, उपसृत्य, समन्तादवलोक्य, साश्चर्यम् ॥ अये ! कथमनवसर एवैतत्क्षणतिरोहितेऽस्मिन् बाणमोक्षः कृतः । तथाहि

क्षणादन्तर्धत्ते, क्षणमथ दृशोरेति विषयं,
मुहुर्दूरं यातो, भवति पुनरप्यन्तिकचरः ।

---

इत्यत्र माशासनान्मोरव इति पाठस्तु न समीचीनः । शार्दूलविक्रीड़ितं वृत्तम् ।

(ण) गर्वादिति । गर्वात् एत्य पुनः तरसा बलेन लक्षीकृतः सन् तत्क्षणं निवृत्य पराङ्मुखीभूय इत्यर्थः आयतः द्रुतविक्षेपात् दीर्घत्वेन प्रतीयमानः अग्रचरणः सम्मुखपादः यस्य तथाभूतः त्रासेन भयेन आकुञ्चितं सङ्कुचितं शरपातभयादिति भावः पश्चार्द्धं शरीरस्य अपरार्द्धं पश्चाद्भागमित्यर्थः आकर्षयन् सम्पिण्डयन्नित्यर्थः श्वासानां निश्वासानाम् उद्रेकेण अतिरेकेण विदीर्णात् विस्तारं गतात् सृक्कविवरात् ओष्ठप्रान्ताभ्यन्तरात् भ्रश्यन् पतन् मृणालस्य अङ्कुरः यस्य तथाविधः अतएव व्यपगतया व्रीड़या असामर्थ्यजनितनिर्लज्जतयेत्यर्थः विलक्षं वैलक्ष्ययुक्तम् आननं यस्य तादृशः ते तुभ्यं त्वां प्रतीत्यर्थः दंष्ट्राम् अर्पयतीव । यथा पराभूता नृपा आत्मरक्षायै विजेत्रे शिरोभूषणादिकमर्पयन्ति तथायं सृक्कविवरभ्रश्यन्मृणालाङ्कुरव्याजेन स्वां दंष्ट्रामर्पयतीवेति भावः । शार्दूलविक्रीड़ितं वृत्तम् ।

(त) क्षणादिति । अयं वराहः क्षणात् अन्तर्धत्ते तिरोभाव

पुरः पार्श्वे पश्चाद्भ्रमति परितस्तत्कथममुं
स्फुरद्विद्युल्लोलं कलयति नु लक्ष्यं मम मनः॥ (त)

निपुणमवलोक्य, दूरतो दृष्ट्वा, सानन्दम्॥ कथमिमामरण्यानी-मतिक्रम्य प्रसन्नां (थ) भुवम् अधिरूढः?। सूत सूत! सत्वरं प्रेरयाश्वान् क्व पुनरिदानीं यास्यति।

सूतः॥ तथा कृत्वा रथवेगमभिनीय॥ आयुष्मन्! पश्य पश्य,

जवाज्जित्वा पश्चात्सततरजसः पृष्ठमरुतः
पुरो लक्ष्यासत्ति-त्वरितमनुधावन्मम मनः।
अयं ते निष्कम्प-ध्वज-पट-परामृष्ट-जलदो
रथस्तांस्तान् देशानभिपतति तुल्यं त्वदिषुभिः॥ (द)

राजा॥ सविस्मयम् तथाहि,

---

व्रजति, क्षणं दृशोः नयनयोः विषयं गोचरम् एति प्राप्नोति, सद्यः पुनः दूरं यातः गतः पुनश्च अन्तिकचरः समीपवर्त्ती भवति, पुरः अग्रतः, पार्श्वे पश्चात् परितः समन्तात् भ्रमति तत् तदा मम मनः स्फुरन्ती या विद्युत् तद्वत् लोलः चपलः तम् अमुं लक्ष्यं शरव्यं कथं, न कलयति न निश्चिनोति? शिखरिणीवृत्तम्।

(थ) प्रसन्नां परिष्कृताम्।

(द) जवादिति। जवात् वेगात् सततानि सन्ततानि रजांसि येषु तान् पृष्ठमरुतः पृष्ठस्थितान् मरुतः वातान् जित्वा वायोरपि अधिकं वेगं कृत्वेति भावः पश्चात् पुरः अग्रतः लक्ष्यस्य शरव्यस्य आसत्तये प्राप्त्यर्थं त्वरितं मम मनः अनुधावत् अनुसरत् अयं निष्कम्पेन वेगवशात् निश्चलेन ध्वजपटेन पताकया परामृष्टः स्पृष्टः जलदः मेघः यस्य तादृशः ते तव रथः तव इषुभिः शरैः तुल्यं समं तान् तान् देशान् अभिपतति अभिगच्छति। शिखरिणीवृत्तम्।

दिवि व्यावल्गद्भिर्विजितपवनैः स्यन्दनहयै-
र्जवादुत्क्रामद्भिर्जलनिधिमिवाह्नाय पततः ।
अहो दूराद्दूरं व्रजति मम भिन्नाञ्जनचय-
च्छवि-श्यामः क्रोड़ो दिनकृत इव ध्वान्तनिचयः ॥(ध)

अग्रतोऽवलोक्य, सखेदम् ॥ कथमिमामरण्यानीमतिक्रम्य (न)स-म्प्रत्यस्तमित-दर्शनस्य पदपङ्क्तिरप्यन्तर्हिता ? भवतु, अग्र-तस्तावदिमां सुस्निग्धामरण्यलेखां विचिनोमि ॥ इति तथा कुर्वन्, सानन्दम् ॥ हन्त ! तपोवनोपकण्ठेनानेन भवितव्यम् । तथाहि,

आमूलं क्वचिदुद्धृता,क्वचिदपि छिन्ना, स्थली बर्हिणाम्,
आनम्रा कुसुमोच्चयाच्च, सदयाकृष्टाग्रशाखा, लता ।

---

(ध) दिवीति । भिन्नः विमर्दितः यः अञ्जनानां चयः राशिः तस्य छविरिव श्यामः कृष्णवर्णः अयं क्रोडः दिनकृतः सूर्य्यस्य ध्वान्त-निचयः तमोराशिरिव दिवि अन्तरीक्षे व्यावल्गद्भिः विचरद्भिः पवनैः पवनजयिभिः अतएव जवात् वेगात् जलनिधिम् उत्क्रामद्भिरिव स्यन्द-नहयैः रथाश्वैः अह्नाय द्रुतं पततः गच्छतः मम दूरात् दूरं व्रजति गच्छति अहो आश्चर्यम् । शिखरिणीवृत्तम् ।

(न) अरण्यानीं महावनं महारण्यमरण्यानीत्यमरः । अस्तमितं तिरोहितं दर्शनं यस्य तादृशस्य अदर्शनं गतस्येत्यर्थः । अन्तर्हिता तिरोहिता । सुस्निग्धां सौम्यदर्शनामित्यर्थः अरण्यलेखां वनश्रेणीं विचिनोमि अन्विष्यामि ।

(प) आमूलमिति । क्वचित् कुत्रापि प्रदेशे बर्हिषां कुशानां स्थली आमूलात् उद्धृता उन्मूलिता, क्वचिदपि छिन्ना बर्हिषामुन्मूलनेन छेदनेन च स्थल्या उन्मूलनं छेदनञ्च बोध्यम् । कुसुमानाम् उच्चयात् चयनात् हेतोः सदयं यथा तथा आकृष्टा अग्रशाखा यस्याः तादृशी

एते पूर्व्व-विलून-वल्कलतया रूढ़-व्रणाः शाखिनः,
सद्यश्छेदममी वदन्ति समिधां प्रस्यन्दिनः पादपाः ॥(प)

समन्तादवलोक्य, स्तुतिमभिनीय, सकौतुकम् ॥ आर्य्ये ! पश्य पश्य,

नीपस्कन्धे कुहरिणि शुकाः स्वागतं व्याहरन्ति,
घ्राणग्राही हरति हृदयं हव्यगन्धः समीरः।
एता मृग्यः सलिल-पुलिनोपान्त-संसक्त-दर्भं
पश्यन्त्योऽस्मान् सचकितदृशो निर्झराम्भः पिबन्ति ॥(फ)

तदलमिदानीमाश्रमोपशल्य-(ब)चारिणानेनान्विष्टेन।

सूत ! सम्प्रति गृहीतोदकान् विश्रामयाश्वान्। यावदह-मपि धनुर्मात्रसहाय एवाश्रमपदं प्रविश्य मुनीनभिवादये।

---

लता आनम्रा ईषत् विनता तिष्ठतीत्यर्थः। एते शाखिनः तरवः पूर्वं विलूनानि विच्छिन्नानि वल्कलानि येभ्यः तेषां भावः तत्तया रूढव्रणाः व्रणाङ्किता इत्यर्थः। अमी पादपाः प्रस्यन्दिनः निर्यासस्राविणः अतः सद्यः साम्प्रतिकं समिधाम् इन्धनानां छेदं वदन्ति प्रकटयन्ति। शार्दू-लविक्रीडितं वृत्तम्।

(फ) नीपेति। कुहरिणि सकोटरे नीपानां कदम्बानां स्कन्धे काण्डे शुकाः शुकपक्षिणः स्वागतं सुखेन आगतमिति वचनं व्याह-रन्ति वदन्ति अभ्यागतानिति शेषः। तपोवनप्रभावादिति भावः। घ्राणग्राही घ्राणेन्द्रियतर्पण इति भावः हव्यगन्धः हव्यनीयद्रव्यगन्ध-विशिष्टः समीरः वायुः हृदयं हरति आनन्दयतीत्यर्थः। एता मृग्यः हरिण्यः अस्मान् पश्यन्त्यः अवलोकयन्त्यः अतएव सचकितदृशः सत्रासलोचनाः सत्यः सलिलस्य पुलिनोपान्तेषु सैकतप्रान्तेषु संसक्ताः सञ्जाताः दर्भाः कुशाः यस्य तथाभूतं निर्झराम्भः पिबन्ति। मन्दा-क्रान्तावृत्तं मन्दाक्रान्ताम्बुधिरसनगैर्मोभनौतौ गयुग्ममिति तल्लक्षणात्।

(ब) आश्रमोपशल्यचारिणा आश्रमान्तिकचारिणा।

अतिक्रान्तान्यर्हणीय-(भ)सभाजनानि किल श्रेयसां परिपन्थीनि भवन्ति ॥ इति ॥रथावतरणं नाटयति ॥

सूतः ॥ यथादिशति स्वामी ॥ इति निष्क्रान्तः ॥

राजा ॥ चिन्तां नाटयित्वा, सश्लाघम् ॥ अहो ! निर्ग्रन्थिरमणीयतया निरतिशयानि तपोवनवासिनां सुखानि । कुतः,

मनः सम्भोगेभ्यः स्पृहयति न सङ्कल्प-विरतं,
वियोगेषु स्नेहान् विदधति न वा निर्ममतया ।
अहङ्कार-त्यागान्निज-पर-विभाग व्युपरमे
परां शान्तिं प्राप्ताः किमपि सुखिनः संयम-धनाः ॥ (म)

सविनयं परिक्रम्य, साध्वस(य)मभिनीय, साशङ्कम् ॥ अये ! कथं

---

(भ)अतिक्रान्तानि उल्लङ्घितानि अर्हणीयानां पूज्यानां सभाजनानि पूजाः । परिपन्थीनि प्रतिकूलानि । निर्ग्रन्थीति नास्ति ग्रन्थिः बाधा येषां तादृशानि अतएव रमणीयानि तेषां भावः तत्तया निरतिशयानि अत्यधिकानीत्यर्थः ।

(म) मन इति । सङ्कल्पाविरतं वासनारहितं मनः सम्भोगेभ्यः स्रक्चन्दनवनितादीनामिति शेषः न स्पृहयति न आकाङ्क्षतीत्यर्थः । संयमधनाः तपोधना मुनयः निर्ममतया मायाराहित्येन वियोगेषु विच्छेदेषु स्नेहान् स्नेहनिबन्धनान् शोकानिति भावः न वा विदधति नैव कुर्वन्ति तथा अहङ्कारस्य अभिमानस्य त्यागात् वर्जनात् निजपरविभागस्य स्वपरभेदस्य व्युपरमे विशेषेण उपरतौ सति किमपि अनिर्वचनीयामिति भावः परां महतीं शान्तिं शमसुखं प्राप्ताः अतएव सुखिनः सततं सुखमेवानुभवन्ति न तु कदाचित् दुःखमिति भावः । शिखरिणीवृत्तम् ।

(य) साध्वसं भयं भीतिर्भीः साध्वसं भयमित्यमरः । आश्रमस्यहरालोकानि अविनयिभिर्दुर्दर्शानीत्यर्थः ।

सापराधस्येव साध्वसमुपजनयन्त्यप्रश्रयदुरालोकान्यदृष्टपूर्व्वतया तपोवनानि; अथवा सर्व्वाभिभावि किमप्यनभिभवनीयं तेजसामुपरि तपोमयं ब्राह्मतेजः! कुतः,

पदे पदे साध्वसमावहन्ति प्रशान्त-रम्याण्यपि मे वनानि।
सर्व्वाणि तेजांसि मृदूभवन्ति स्वयोनिमासाद्य यथाग्निरम्भः॥(२)

॥ इतिससाध्वसं परिक्रामति॥

नेपथ्ये॥ परित्ताअध अज्जा! परित्ताअध, एदाओ अणवराधमाणाओ अणाधाओ असरणाओ हुदवहे परिक्खिविआमो मन्दभाइणीओ ता परित्ताअध अज्जा! परित्ताअध। (१)

राजा॥ श्रुतिमभिनीय ससम्भ्रमम्॥ अहह! इतो नातिदूरे भयार्त्तानां योषितामिवार्त्तः प्रलापः श्रूयते॥ साश्चर्य्यम्॥ अये! तपोवनमिदम्, क्व पुनरत्नेदृशानामविनीतानां सम्भवः? भवतु, उपसर्पामि॥ तथा करोति॥

---

(१) परित्रायन्तामार्य्याः! परित्रायन्ताम्, एताः अनपराध्यन्त्यः अनाथा अशरणा हुतवहे परिक्षिप्यामहे मन्दभागिन्यः। तत् परित्रायन्तामार्य्याः! तत् परित्रायन्ताम्।

---

(२) पदे इति। प्रशान्तानि सौम्यानि अतएव रम्याणि अपि वनानि पदे पदे प्रतिपादविक्षेपमित्यर्थः मे मम साध्वसं भयम् आवहन्ति जनयन्ति। अग्निः अम्भः जलं यथा सर्वाणि तेजांसि स्वयोनिं स्वप्रभवमासाद्य मृदु भवन्ति मार्दवं भजन्ते ब्राह्मं तेजोहि सर्वेषां प्रभव इति भावः। उपजातिवृत्तं सामान्येन विशेषसमर्थनरूपो-

नेपथ्ये ॥ तथैव पठते ॥

राजा ॥ श्रुत्वा सावष्टम्भम् (ल) ॥ अभयमभयम् भयार्त्ता-नाम् ॥ सक्रोधम् । आः !

कोऽयं तपोवन-विरुद्धमनात्मनीनं,
क्रूरो नृशंसमनुतिष्ठति कर्म्म घोरम् ।
तस्यैष वाण-परिलूनशिरोधरस्य
प्रत्यङ्गमुज्ज्वलशिखे ज्वलने जुहोमि ॥ (व)

इति परिक्रम्य, नेपथ्याभिमुखमवलोक्य सविस्मयम् ॥ अये ! कोऽयं मध्येऽग्न्युपासीनेन विलपता भयार्त्तेन दिव्यरूपिणा नारीत्रयेण सह सन्निहित-होमसाधनोऽग्निशालामध्यास्ते ? नूनं तापसाकल्पधारिणा (श) पाखण्डेनानेन भवितव्यम् ।

ततः प्रविशति होमं नाटयन् विश्वामित्रो, यथानिर्द्दिष्टाश्च विद्याः ॥

विद्याः ॥ सम्भ्रमं नाटयन्त्यः पूर्व्वोक्तं पठन्ति ॥

विश्वामित्रः ॥ साश्चर्य्यम् ॥ अहो नु खलु भोः !

---

ऽर्थान्तरन्यासः स चोपमानुप्राणित इति उपमार्थान्तरन्यासयोरङ्गाङ्गि-भावः सङ्करः ।

(ल) सावष्टम्भं सावेगम् ।

(व) क इति । कः अयं क्रूरः अनात्मनीनम् आत्मनः अहितकर तपोवनस्य विरुद्धम् अनुचितं घोरं दारुणं नृशंसं निष्ठुरं कर्म्म स्त्रीरू-त्याह्वयम् अनुतिष्ठति ? वाणेन शरेण परिलूना छिन्ना शिरोधरा यस्य तादृशस्य तस्य प्रत्यङ्गं सर्व्वाङ्गानीत्यर्थः उज्ज्वला शिखा यस्य तथा-भूते ज्वलने अग्नौ जुहोमि एव विक्षिपामि खलु । वसन्ततिलक-वृत्तम् ।

(श) तापसाकल्पधारिणा तापसवेशधरेण ।

वहति हविरुपांशु मन्त्रपूतं
भवति तथापि न दक्षिणार्च्चिरग्निः।
किमिदमुपगताः क्रियाप्रभावात्
न मम वशित्वमिमाः प्रयान्ति विद्याः॥ (ष)

॥ इति समाधिं नाटयति ॥

विद्याः ॥ पूर्व्वोक्तं पठन्ति ॥

राजा ॥ सत्वरमुपसृत्य ॥ अभयमभयम् भयार्त्तानाम्; तिष्ठ रे दुरात्मन्! पाखण्डाधम! तिष्ठ; क एष ते प्रच्छन्न-राक्षसस्य मायाप्रपञ्चः? (स) तथाहि,

वासो वल्कलमक्षसूत्र-वलयी पाणिर्जटालं शिरः,
कोऽयं वेषपरिग्रहो गुरुतपोदान्तस्य शान्तात्मनः।
केयं ते शठ! दुर्मतेरकरुणा बीभत्स-नारीवध-
क्रीड़ा-पातकिनी मतिर्भज फलं स्वस्याधुना कर्म्मणः॥(ह)

---

(ष) वहतीति। अग्निः उपांशु एकान्ते मन्त्रपूतं हविः हव्यं मन्त्रमिति शेषः वहति, तथापि दक्षिणार्च्चिः प्रदक्षिणशिखः न भवति तस्यैव कार्य्यसिद्धिसूचकत्वादिति भावः। क्रियाप्रभावात् अनुष्ठान-माहात्म्यात् उपगताः उपनताः अपिरत्नाद्याहार्य्यः इमा विद्याः तिस्र इति भावः मम वशित्वम् अधीनत्वं न प्रयान्ति किमिदम्?। पुष्पि-ताग्रावृत्तम् अयुजि नयुगरेफतो यकारो युजितु नजौ जरगाश्च पुष्पि-ताग्रेति तल्लक्षणात्।

(स) मायाप्रपञ्चः कापट्यविस्तारः।

(ह) वास इति। रे शठ! दुरात्मन्! वल्कलं तरुत्वक् वासः वसनं पाणिः करः अक्षसूत्रवलयी, जपमालानिरतः, शिरः जटालं जटावत्, गुरुणा तपसा दान्तस्य जितेन्द्रियस्य शान्तात्मनः प्रशान्तचि-

विश्वामित्रः ॥ संरम्भं नाटयन्, सक्रोधम् ॥

एष प्राप्तेन्धनश्रीः श्रवण-कटुतराक्रोश-सङ्घट्ट-जन्मा
क्षोभादन्तःसमाधि-व्यपगम-पवनो-द्दीप्यमानोरु-दीप्तिः ।
लीलामासाद्य सद्यः क्षय-पवन-समुद्भूत-कल्पान्त-वह्ने-
स्त्रैलोक्य-ग्रास-तृष्णामपनयतु मम क्रोधजो जातवेदाः ॥(च)

विद्याः ॥ सहर्षम् ॥ प्रियं नः प्रियम्; विजयतां विजयतां महाराज हरिश्चन्द्र ! ॥

॥ इति निष्क्रान्ताः ॥

---

त्तस्य स्वयं वेषपरिग्रहः पूर्वोक्तवल्कलाद्याकल्पधारणं कः; दुर्मते दुर्बुद्धे ते तव अकरुणा अतिनिष्ठुरा वीभत्सः जुगुप्सितः दूषित इत्यर्थः यः नारीणां बधः तेन या क्रीड़ा उत्सवः तया पातकिनी पापीयसी इयं मतिश्च का ? किम् शब्दद्वयं महदन्तरं सूचयत्यनयोरिति भावः । तस्मात् अधुना साम्प्रतं स्वस्य आत्मनः कर्मणः फलं भज प्राप्नुहि । शार्दूलविक्रीडितं वृत्तम् ।

(च) एष इति श्रवणस्य श्रोत्रेन्द्रियस्य कटुतरः तीव्रतरः यः आक्रोश निर्भर्त्सनमिति यावत् तस्य सङ्घट्टेन घर्षणेन तज्जनितव्यथयेति भावः जन्म उत्पत्तिः यस्य तथाभूतः मम क्रोधजः कोपजः एषः जातवेदाः अग्निः अन्तःक्षोभात् अन्तरात्मनः सन्तापात् समाधेः तपोनिष्ठाया व्यपगमः व्याघात एव पवनः वायुः तेन उद्दीप्यमाना उरुः महती दीप्तिः यस्य तादृशः सन् प्राप्ता इन्धनेन दाह्यकाष्ठभूतेन हरिश्चन्द्रेणेति भावः श्रीः शोभा यस्य तथोक्तः अतएव सद्यः क्षयपवनेन कल्पान्तवायुना समुद्भूतः समुत्तेजितः यः कल्पान्तवह्निः तस्य लीलां विलासमासाद्य प्राप्य त्रैलोक्यग्रासे त्रिभुवनदहने या तृष्णा तां हरिश्चन्द्रस्य एकस्यैव त्रिलोकाधिपत्ययोग्यत्वेन त्रैलोक्यरूपत्वमिति भावः । अपनयतु नाशयतु । स्रग्धरावृत्तम् । म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयमिति तल्लक्षणात् ।

विश्वामित्रः ॥ दृष्ट्वा, सक्रोधम् ॥ अये! कथमसौ दुरात्मा हरिश्चन्द्रोऽस्माकं श्रेयसामन्तरायः संवृत्तः तिष्ठ रे क्षत्रियापसद! तिष्ठ ॥

कामं हरिर्भव विमूढ़! भवाथ चन्द्र-
श्चन्द्रार्द्धमौलिरथवा हरएव भूयाः।
विद्या-प्रणाश-परिवर्द्धित- घोर-दीप्तेः
क्रोधानलस्य मम नेन्धनतां प्रयासि? ॥ (क)

अपिच रे मूढ़!

कान्ताकेलिमयोऽपि भूतकरुणा-शान्तोऽप्यसौ संयमी
क्रीड़ा-रूढ़-समाधि-भङ्ग-विकट-भ्रूभङ्ग-भीमाननः।
दृष्ट्वाऽऽकृष्ट-शरासनं यदकरोत् क्रुद्धः पिनाकी स्मरं,
त्वामप्यद्य दृशा तदेव कुरुते क्रोधादयं कौशिकः ॥(ख)

---

(क) काममिति। रे विमूढ! मूर्ख! त्वं कामं सम्यक् हरिः विष्णुः भव, अथ किं वा चन्द्रो भव, अथवा चन्द्रार्द्धमौलिः चन्द्रशेखरः हर एव भूयाः, यः कोऽपि भवेति भावः विद्यानां प्रणाशेन ध्वंसनेन परिवर्द्धिता घोरा दीप्तिः यस्य तथाभूतस्य मम क्रोधानलस्य इन्धनतां काष्ठत्वं न प्रयासि? अपि तु अविलम्बमेव प्रयासीत्यर्थः। वसन्ततिलकं वृत्तम्।

(ख) कान्तेति। असौ संयमी समाधिमान् पिनाकी हरः कान्ताकेलिमयः कान्ताविहारार्थी अपि, भूतेषु प्राणिषु यत् करुणा दया तया शान्तः प्रशान्तचित्तोऽपि आकृष्टशरासनं प्रहर्त्तुमुद्यतमित्यर्थः स्मरं कामं दृष्ट्वा क्रुद्धः अतएव क्रीडया लीलया रूढः प्रक्रान्तः यः समाधिः तस्य भङ्गेन व्याघातेन विकटः दारुणः यः भ्रूभङ्गः भ्रुकुटिः तेन भीमं भीषणम् आननं यस्य तथाभूतः सन् यत् नेत्राग्निना दहनमित्यर्थः

राजा ॥ ससम्भ्रममात्मगतम् ॥ अये ! कथं स भगवान् कौशिकोऽयं, ताश्च भगवत्यो विद्याः ? यासां सिद्धयेऽहमप्यस्य पापोऽन्तरायः संवृत्तः । नूनमसमीक्ष्यकारिणा(ग) मयाऽत्यन्तमनेनैव स्फुरच्छिखाकलापो ज्वलनएव पदाऽऽक्रान्तः ।

कौशिकः ॥ सक्रोधम् ॥

प्रारब्ध-साधन-विघात-विरूढ-मन्योः
शापाय धावति करो मम दक्षिणोऽयम् ।
जातिं स्मरन्नपि चिराय समुज्झितां तां
सव्येतरस्तु मम चापमुपैति पाणिः ॥ (घ)

इत्युत्तिष्ठति ॥

राजा ॥ सभयमुपसृत्य ॥ भगवन् ! अभिवादये

कौशिकः क्रोधं नाटयति ॥

राजा ॥ पादयोर्निपत्य ॥ भगवन् ! मर्षय मर्षय, स्त्रीजनार्त्तप्रलाप-माया-वञ्चितस्याविजानतो मे क्षन्तुमर्हसि !

---

अकरोत्, अयं कौशिकः कुशिकनन्दनः विश्वामित्रः अद्य क्रुधा इया चक्षुषा त्वामपि तद्वत् तथैवेत्यर्थः अत्र तच्छब्दोऽव्ययस्तथार्थक इति बोध्यम् । कुरुते । त्वामपि भस्मीकरोमीति भावः । शार्दूलविक्रीड़ितं वृत्तम् ।

(ग) असमीक्ष्यकारिणा अविवेकिना । स्फुरन् शिखानां कलापः समूहः यस्य तथाभूतः ज्वलदुज्ज्वलज्वाल इत्यर्थः ज्वलनः अग्निः । आक्रान्तः आहतः ।

(घ) प्रारब्ध इति । प्रारब्धस्य प्रक्रान्तस्य साधनस्य विद्यावशीकरणरूपस्य विघातेन विरूढः विशेषेण हृदि गतः मन्युः क्रोधः यस्य तथाभूतस्य मम अयं दक्षिणः करः शापाय अभिसम्पातप्रदानाय धावति उद्युङ्क्ते । सव्येतरस्तु वामस्तु मम पाणिः चिराय समुज्झितां

कौशिकः॥ दुरात्मन्! किं नामाविजानतो मे चन्तु-मर्हसि? अरे रे चुद्र! न किल नाम भवतोऽहं विदितः?

जाति-स्वयं ग्रहण-दुर्ललितैक-विप्रं

दृप्यद्वसिष्ठ-सुत-कानन-धूमकेतुम्।

---

परित्यक्तामपि तां जातिं चात्रजातिमित्यर्थः स्मरन् चापं धनुः उपैति प्राप्नोति ग्रहीतुं प्रक्रमते इत्यर्थः। वसन्ततिलकं वृत्तम्।

(ङ) जातीति। जात्या ब्राह्मणस्वरूपायाः स्वयं ग्रहणेन दुर्ललितः दुर्विनीतः एकः अद्वितीयः विप्रः तम्। पुरा चत्रवंशीयोऽपि विश्वामित्रः वशिष्ठविद्वेषजनिततपोबलेन स्वयं ब्राह्मण्यमापेति पुराणवार्त्ता। दृप्यतः दर्पशालिनः वशिष्ठस्य सुताः एव काननानि तेषां धूमकेतुः अग्निः तम्। पुरा किल विश्वामित्रः मृगयां चरन् श्रान्तः क्षुत्पिपासार्दितः कदाचित् वशिष्ठाश्रममाससाद। वशिष्ठश्च तं राजर्षिम् आतिथ्येन निमन्त्रयन् तस्य सानुचरस्य यथोचितसत्काराय स्वां होमधेनुमादिदेश। सा तु तत्क्षणमेव तस्य राजर्षेः सानुचरस्य यथोचितमन्नपानादिना आतिथ्यमकरोत्। तदवलोक्य विश्वामित्रः अतीव विस्मितः तां ग्रहीतुं बहुधनविनिमयेनापि वशिष्ठमयाचत। यदा तु कथमपि तां दातुं वशिष्ठो नैच्छत् तदा विश्वामित्रः तां बाहुबलेन जहार। ह्रियमाणा च सा शबला नाम होमधेनुः किमहम् ऋषिणा राज्ञे दत्ता वा ऋषेरनुमतिं विना बलादनेन नीये इति संशयाना बलात् ऋषिमुपाजगाम रुदन्ती चाब्रवीत् तात! अनपराधेन किमर्थमहं भवता परित्यज्ये इति वशिष्ठोऽवदत् शबले! नाहं त्वां परित्यजामि, अयं हि राजा महाबलः बलात् मत्तो हरतीति। शबलाब्रवीत् पितः! यदि अनुमतिर्भवेत् अहमेव एनं सबलं विनाशयामीति। अथ तेनानुमता सा बहुतराणि बलानि प्रसूय तत् राजसैन्यं सर्वं नाशयामास। वशिष्ठश्च स्वयम् आततायिनस्तान् विश्वामित्रसुतान् हुङ्कारेणैव भस्मीचकार। ततो हतसैन्यो विश्वामित्रः परं निर्वेदमापन्नः तदैव राज्यं

सर्गान्तराहरण-भीत-जगत्-कृतान्तं
चण्डाल-याजिनमवैषि न कौशिकं माम्? ॥ (ङ)

---

विहाय वशिष्ठं प्रतिचिकीर्षुः हिमवन्तं गत्वा तपश्चकार। तपोबलेन च प्रीतात् पिनाकिनः विविधमन्त्रजातमासाद्य पुनर्वशिष्ठाश्रमं युद्धार्थी आजगाम। वशिष्ठस्तु ब्रह्मदण्डेन तत्सर्व्वं विश्वामित्रस्य मन्त्रजातं भस्मीकुर्वन् पुनस्तं निर्जिगाय। अथ विश्वामित्रः नितरां निर्विन्नः धिक् बलं क्षत्रियबलं ब्रह्मतेजोबलं बलमिति निश्चिन्वन् तपसा ब्रह्मत्व-लाभाय यतमानः कामेन ब्रह्मर्षित्वमवाप। चकार च पूर्वरोषात् वशिष्ठ-सुतान् भस्मसात्। इति पौराणिकी गाथा। सर्गान्तरस्य अन्यस्याः सृष्टेः आहरणात् अनुष्ठानात् भीतस्य जगतः कृतान्तं यमसदृशमित्यर्थः। पुरा किल यदा विश्वामित्रः अतिकठोरेणापि तपसा ब्रह्मत्वं न लेभे तदा ब्रह्मविद्वेषेण सर्गान्तरप्रणयने कृतनिश्चयः दक्षिणस्यां दिशि अपरं सप्तर्षिमण्डलं नक्षत्राणि च बहूनि सृष्ट्वा इन्द्रादीनपि अपरान् स्रष्टुमुपचक्रमे। तदवलोक्य भीतैः देवैः सह समागत्य प्रजापतिना ब्रह्मत्वदानेन सान्त्वितो निववृते इति पुराणम्। चण्डालयाजिनं चण्डालभूतस्य त्रिशङ्कोः सशरीरस्वर्गानयनाय कृतयागम्। पुरा किल त्रिशङ्कुर्नाम अयोध्याधिपतिः सशरीरस्वर्गप्राप्तिकामनया यियक्षुः कुल-गुरुं वशिष्ठं स्वाभिप्रायं न्यवेदयत्। वशिष्ठेन तु तदशक्यं तवेति प्रत्याख्यातः तत्पुत्रानुपगम्य अभिवाद्य च स्वाभिप्रायं गुरुप्रत्याख्यानञ्च निवेद्य स्वसङ्कल्पसिद्धये तानभ्यर्थयामास। ते च तमब्रुवन् मूढ़! गुरुणा अशक्यं तत् कार्य्यं कर्त्तुमस्माकं कः शक्नुयात्, इत्थोद्यमात् निवर्त्तस्वेति। ततस्तेन राज्ञा तर्हि अहम् अन्यं कमपि अस्मिन् कर्म्मणि वृणे; भवतामेतत् विदितमस्त्विति। ते तु तस्य तेन वचसा रोषपरीताः यत् त्वं गुरुं त्यजसि, तत् सद्यः चण्डालतां व्रजेति अशपन्। ततृक्षणञ्च स राजा राजश्रीवर्ज्जितश्चण्डालदर्शनो भूत्वा सर्वैः परित्यक्तो विश्वामित्रं वशिष्ठद्वेषिणमुपाजगाम उवाच च भगवन्! सशरीरः स्वर्गं यियासुः

राजा। भगवन्! प्रसीद प्रसीद, नैवमवगन्तुमर्हसि।
अन्नक्षयादिषु तथाविहितात्मवृत्तिं
राज-प्रतिग्रह-पराङ्मुख-मानसं त्वाम्।
आडीवक-प्रधन-कम्पित-जीवलोकं
कस्तेजसां च तपसां च निधिं न वेत्ति॥ (च)

---

यागायाहं प्रार्थयन् वशिष्ठेन तत्पुत्रैश्च प्रत्याख्यातः ईदृशीं दशां गमितश्च। सोऽहमधुना भवन्तं शरणं गत इति। विश्वामित्रस्तु तदाकर्ण्य तं बहुशः समाश्वस्य तदभिप्रेतयागाय प्रवव्रते। यदा च यज्ञभागहरणार्थं देवाः तस्मिन् चाण्डालयज्ञे नागच्छन् तदा कोपाविष्टो विश्वामित्रः स्रुवमुद्यम्य प्रोवाच त्रिशङ्को! मदुपार्जित-तपोबलेन त्वं सशरीरः स्वर्गं गच्छेति। तथाभिहित एव त्रिशङ्कुः स्वर्गगमनाय आकाशमार्गमारुरोह। तदवलोक्य सुरराट् सर्वैः देवैः सह समागत्याब्रवीत् दुरात्मन् गुरुशापहत त्रिशङ्को! न ते स्वर्गाधिकारः भूमौ पतेति। एवमुक्तस्तु त्रिशङ्कुः अन्तरीक्षात् पतन् अवाक्शिराः पाहि पाहीति विश्वामित्रमुपाक्रोशत्। तदाकर्ण्य विश्वामित्रेण अत्रैव तिष्ठेत्यभिहितः सुतरामेव रोदस्योरन्तराले तस्थौ। इति पुराणवार्त्तात्रानुसन्धेया। कौशिकं कुशिकनन्दनं विश्वामित्रं मां न अवैषि न जानासि?। वसन्ततिलकं वृत्तम्।

(च) अन्नक्षयादिष्विति। को जनः अन्नक्षयादिषु दुर्भिक्षसमयादिषु तथा तेन प्रकारेण विहिता सम्पादिता आत्मनः स्वस्य वृत्तिः जीविका येन तथोक्तम् एकदा दुर्भिक्षकाले क्षुधार्त्तो विश्वामित्रः चाण्डालगृहात् कौक्कुरं जाघनं मांसमादाय देवेभ्यो निवेद्य भक्षितवान्। तेन च परितुष्टाः देवा जलवर्षणादिना दुर्भिक्षनाशमकुर्वन्निति पुराणवार्त्ता क्षुधार्त्तस्तानुसन्धेयात् विश्वामित्रः श्वजाघनीम्। चाण्डालहस्तादादाय धर्माधर्मविचक्षण इति मनुश्च। राज्ञः प्रतिग्रहात् दानग्रहणात् पराङ्मुखं निवृत्तं मानसं यस्य तथाविधम् अतिकष्टावस्थायामपि राज-

किन्तु भीरुजनार्त्तप्रलापमुपश्रुत्य इदमुपक्रान्तम्, (छ) स्वधर्माक्षिप्त-चेतसस्त्वामविजानतो मे क्षन्तुमर्हसीति विज्ञापयामि।

कौशिकः॥ दुरात्मन्! कथय कथय, कस्ते धर्म इति।

राजा॥ भगवन्!

दातव्यं, रक्षितव्यं च, योद्धव्यं क्षत्रियैरिति।

गीतः पुराणैर्मुनिभिरेष धर्म्मः सनातनः॥ (ज)

कौशिकः। किं नाम? दातव्यमित्यादि पठति॥

राजा॥ अथकिम्।

कौशिकः॥ यद्येवं, कथय, कस्मै दातव्यं, कस्य रक्षणीयः, केन सह योद्धव्यम्?

राजा॥ भगवन्! श्रूयताम्।

कौशिकः॥ कथ्यताम्।

राजा॥

---

प्रतिग्रहवर्जितमित्यर्थः राजप्रतिग्रहस्य निषिद्धत्वात् तदुक्तं न राज्ञः प्रतिगृह्णीयात् क्षुधया पीड़ितोऽपि सन्निति। व्याड़ीवकप्रधनेन तदाख्य युद्धविशेषेण कम्पितः जीवलोकः येन तादृशम् एतत् प्रमाणं पुराणादिषु रम्यम्। तेजसां तपसाञ्च निधिं त्वां न वेत्ति न जानाति? सर्व एव जानातीत्यर्थः। वसन्ततिलकं वृत्तम्।

(छ) उपक्रान्तम् आरब्धं भवन्तं प्रति निर्भर्त्सनरूपमित्यर्थः। स्वधर्मेति स्वस्य धर्मः स्वधर्मः क्षात्रोधर्मः इत्यर्थः तेन आक्षिप्तम् आकृष्टं चेतो यस्य तादृशस्य स्वधर्ममनुपालयत इत्यर्थः।

(ज) दातव्यमिति। क्षत्रियैः दातव्यं रक्षितव्यं योद्धव्यञ्च इत्येषः सनातनो धर्मः क्षत्रियाणामिति शेषः पुराणैः मुनिभिः गीतः कीर्त्तितः।

गुणवद्भ्यो द्विजातिभ्यो देयं, रक्ष्या भयार्दिताः ।
अरातिभिश्च योद्धव्यमिति मे निश्चिता मतिः ॥ (झ)

कौशिकः ॥ महात्मन् ! यद्येवं मन्यसे, तदा दीयताम-स्मभ्यं विद्यातपोऽनुरूपं किञ्चित् ।

राजा ॥ सहर्षम् ॥ नन्वनुगृहीतस्तर्हि भगवता वैव-स्वतो (ञ) वंशः, तत् प्रसीद भगवन् ! प्रसीद ।

नार्हन्ति सर्वभुवनान्यपि दक्षिणायै,
सर्वस्व-दान-विनिवेदन-कुण्ठ-शक्तिः ।
पूर्णां धनैः कुशिकनन्दन ! तुभ्यमद्य
कृत्स्नामिमां वसुमतीं विनिवेदयामि ॥ (ट)

कौशिकः । साश्चर्यमात्मगतम् ॥ भवत्वेवं तावत् ॥ प्रका-शम् ॥

---

(झ) गुणवद्भ्य इति । गुणवद्भ्यः विद्वद्भ्यः, द्विजातिभ्य देय दातव्यं भयार्दिताः विपन्ना इत्यर्थः रक्ष्याः रक्षितव्याः अरातिभिः शत्रुभिः योध्यव्यञ्च इति मे मम मतिः निश्चिता ।

(ञ) वैवस्वतः सौरः ।

(ट) नेति । हे कुशिकनन्दन ! सर्वाणि अपि भुवनानि तव दक्षि-णायै तपो विद्योचितपुरस्काराय इति यावत् न अर्हन्ति न पर्य्या-प्नुवन्ति तव यादृशस्तपोविद्यादिगुणवत्त्वातिशयः त्रिलोकदानेऽपि तस्य न समुचितसत्कारः स्यादिति भावः । तस्मात् अद्य सर्वस्वदानस्य निवे-दनेन कुण्ठा सङ्कुचिता शक्तिर्यस्य तथाभूतः अहं सर्वस्वातिरिक्तधनदाने न मम शक्तिरस्तीति भावः । धनैः पूर्णां कृत्स्नां समग्रामिमां वसुमतीं तुभ्यं विनिवेदयामि अर्पयामि । वसन्ततिलकं वृत्तम् ।

राजन्! स्वस्ति, किन्तु नादक्षिणं (ठ) दानमामनन्ति, तदर्हसि दक्षिणां दातुमिदानीम्।

राजा ॥ सव्रीड़मात्मगतम् ॥ किमत्र प्रतिपत्तव्यम् ॥ (ड) चिरं विचिन्त्य, सहर्षम् ॥ भवत्वेवं तावत्। प्रकाशम्। भगवन्!

समुपाहृत्य दास्यामि हेम्नां लक्षञ्च दक्षिणाम्।
अद्यप्रभृति मे मासमवधिं क्षन्तुमर्हसि ॥ (ढ)

कौशिकः ॥ अनुमतोऽयमवधिः, (ण) किन्तु परिहृत्य वसुमतीमन्यतः समुपाहृत्य दातव्यम्।

राजा ॥ साशङ्कमात्मगतम् ॥ कथमत्र प्रतिविधेयम् ॥ विचिन्त्य, सहर्षम् ॥ हन्त! लब्धं प्रतिविधानं, (त) यतोऽस्ति किल भगवतः शिवस्य परिग्रहः परं क्षेत्रम्।

वाराणसीति वसुधातल-भोग-भिन्नां
यामन्तरीक्षनगरीं मुनयो वदन्ति।

---

(ठ) नादक्षिणमिति। अदक्षिणं दक्षिणारहितम् आमनन्ति कथयन्ति बुधा इति शेषः।

(ड) प्रतिपत्तव्यं कर्त्तव्यम्।

(ढ) समुपाहृत्येति। हेम्नां सुवर्णानां लक्षं समुपाहृत्य संगृह्य दक्षिणां दास्यामि, किन्तु अद्य प्रभृति मासम् अवधिं यावत् मे मम क्षन्तुम् अर्हसि।

(ण) अनुमत इति। अवधिः समयः मासरूप इत्यर्थः अनुमतः स्वीकृतः। अन्यतः वसुमतीव्यतिरिक्तात् स्थानादित्यर्थः।

(त) प्रतिविधानं प्रतीकारः। परिग्रहः आश्रयः परं क्षेत्रं वाराणसीत्यर्थः।

(थ) वाराणसीति। मुनयः वाराणसीति ख्यातामित्यर्थः वसु-

अश्रद्धेयमागमदृशो विदुरन्तरालं
बालाग्रभाग-परिपाटि-सहस्र-सूक्ष्मम् ॥ (थ)

तत आहृत्य दास्ये ॥ प्रकाशम् ॥ भगवन्! यदादिशसि ॥
आभरणान्यवतार्य ॥ भगवन् !

एताः श्रियो भगवती वसुधा तथेयम्
अस्त्राण्यमूनि नृपलाञ्छनमेष मौलिः ।
तद्दर्शनादनुगृहाण मयोपनीतम्
एतत्पुनः कुशिकनन्दन! पादयोस्ते ॥ (द)

इति पादयोर्निपत्योत्थाय ॥ सहर्षमात्मगतम् ॥ दिष्ट्या फलित-मिदानीमायास-भूयिष्ठेनापि(ध)मे राज्यभारेण ॥ सानन्दम् ॥

---

धायाः पृथिव्यास्तले पाताले यो भोगः वासुकिफणभागः भोगः सुखे-स्त्र्यादिभृतावहेश्च फणकाययोरित्यमरः । तस्मात् भिन्नां पृथक् स्थिता-मित्यर्थः पृथिवी हि वासुकिशिरसि स्थिता अस्यास्तु तद्भिन्नत्वात् वासुकिफणसंयोगराहित्यमिति भावः याम् अन्तरीक्षनगरीम् आकाश-पुरीं वा सुरपुरीम् आमनन्ति । आगमदृशः शास्त्रदर्शिनः बालस्य केशस्य यः अग्रभागः तस्य या परिपाटी अवयवः तस्याः सहस्रं सहस्रभागैक-भागः तद्वत् सूक्ष्मं अश्रद्धेयं विश्वासमात्रवेद्यमित्यर्थः अन्तरालं व्यवधानं भूवाराणस्योरिति शेषः विदुः जानन्ति । वसन्ततिलकं वृत्तम् ।

(द) एता इति । हे कुशिकनन्दन! एताः श्रियः सम्पदः, तथा इयं वसुधा पृथ्वी, अमूनि अस्त्राणि एष नृपलाञ्छनं राजचिह्नभूत इत्यर्थः मौलिः किरीटः मौलिः किरीट धम्मिल्लावित्यमरः एतत् सर्वं पुनः मया ते तव पादयोः चरणयोः उपनीतं समर्पितं तत् तस्मात् दर्शनात् अवलोकनात् अनुगृहाण । वसन्ततिलकं वृत्तम् ।

(ध) आयासभूयिष्ठेन परिश्रमबहुलेन । सफलो जातः राज्यभार इति भावः ।

मया मुनेरयं मन्युर्यो वज्र इति शङ्कितः ।
स एष कुसुमापीड़ः पतितो मम मूर्द्धनि ॥ (न)

भगवति वसुन्धरे ! तदियमापृष्टासि (प) ।

वैवस्वतैर्नृपतिभिः किल लोकधात्रि !
त्वं देवि ! वीर यशसा सह रक्षितासि ।
त्यक्ता मया यदसि दुर्लभ-पात्र-लोभा-
देकं क्षमस्व मम दुर्नयमेनमेव ॥ (फ)

तद्यावदयोध्यां गत्वा, भगवतः प्रतिश्रुतं सम्पाद्य, दक्षिणो-पार्जनाय वाराणसीमेव गच्छामि ॥ प्रकाशम् ॥ भगवन् ! इतोऽयोध्यां गत्वा कृतकृत्यं निर्वर्त्य दक्षिणोपार्जनाय मम आज्ञापयितुमर्हसि ।

कौशिकः ॥ साश्चर्यमात्मगतम् ॥ अहो दुरात्मनः स्थैर्य्यं महानुभावता च ! दुरात्मन् ! अचिराद्द्रक्ष्यामि ते शौण्डी-र्य्यम् (ब) ।

---

(न) मयेति । मया मुनेः यः अयं मन्युः क्रोधः वज्रः कुलिश-मिति शङ्कितः तर्कितः, स एव मन्युः कुसुमापीड़ः पुष्पमाल्यं सन् मम मूर्ध्नि शिरसि पतितः ।

(प) आपृष्टा सम्भाविता ।

(फ) वैवस्वतैरिति । हे लोकधात्रि ! देवि ! वैवस्वतैः सूर्य्य-वंशीयैः नृपतिभिः त्वं वीरयशसा सह रक्षिता पालिता असि किलेति प्रसिद्धौ । मया पुनः दुर्लभपात्रलोभात् अतिदुष्प्राप्यसत्पात्रप्राप्तिलो-भात् यत् परित्यक्तासि, तदेकमेव एनं मम दुर्नयं दुराचारं क्षमस्व । वसन्ततिलकं वृत्तम् ।

(ब) शौण्डीर्य्यं दानवीरत्वम् ।

तथाहि ॥

पश्यामि यावच्चलितं न सत्याद्राज्यादिव स्वादचिराद्भवन्तम् ।
त्वद्दुर्नयोद्दीपित-तीव्र-तेजास्तावन्न मे शान्तिमुपैति मन्युः॥(भ)

॥ प्रकाशम् ॥ राजन् ! एवमस्तु को दोषः ।

॥ इति निष्क्रान्तौ ॥

॥ इति आर्य्य-क्षेमीश्वर-कृते चण्डकौशिक-नाटके
द्वितीयोऽङ्कः ॥

---

# तृतीयाङ्कः ।

॥ ततः प्रविशति वीभत्सवेषः पापपुरुषः ॥

पापपुरुषः ॥ विकटं परिक्रम्योच्चैर्विहस्य ॥

मुहमेत्त-मुहुल मुहुले सोअ-विओअ-आहि-वाहि-कडुमज्झे ।
बहु-णलक-दुःख-दालुण पलिणामे दुक्कले क्खु हगे ॥(१) (क)

---

(१) सुखमात्र मधुरमधुरः शोकवियोगाधि-व्याधि-कटुक-मध्यः ।
बहु-नरक-दुःख-दारुण-परिणामो दुष्करः खल्वहम् ॥

---

(भ) पश्यामीति । तव दुर्नयेन दुराचारेण मम विद्यावशीकरण-व्याघातरूपेण इति भावः उद्दीपितं तीव्रम् उग्रं तेजो यस्य तादृशः अहं स्वात् राज्यादिव अचिरात् शीघ्रं सत्यात् चलितं भ्रष्टं भवन्तं यावत् न पश्यामि, मे मम मन्युः क्रोधः तावत् शान्तिं न उपैति न प्राप्नोति । इन्द्रवज्रावृत्तम् ।

(क) सुखेति । अहं खलु सुखमात्रे प्रारम्भकाले मधुरमधुरः

पुरतोऽवलोक्य, सभयमपसृत्य ॥ हा मादीए(ख) उच्छादिदेह्मि वावादिदेह्मि इमाए दुग्गेज्झ णामधेआए दुट्ठ-णाहलीए। चिट्ठदु दाव इध प्पवेसे। पेच्छिदुं पि ण पालेमि एदं। ता किंणु खु एत्थ कलइस्सं ॥ सम्भाव्य॥ भोदु इदो एअन्ते भविअ चिट्ठिस्सं, जेण पविसन्ते हिं जणेहिं जम्मंतल-संचिदे पडिच्चत्ते ताणं पुणोवि णिक्कमंताणं पच्छा अणुलग्गिस्सं।

---

हा मातृके ! उत्सादितोऽस्मि व्यापादितोऽस्मि अनया दुर्ग्राह्य-नामधेयया दग्धनगर्य्या। तिष्ठतु तावदिह प्रवेशः, प्रेक्षितुमपि न पारयाम्येताम्। तत् किं नु खलु अत्र करिष्ये। भवतु इत एकान्ते भूत्वा स्थास्यामि, येन प्रविशद्भिर्जनैः जन्मान्तरसञ्चिते परित्यक्ते तेषां पुनरपि निष्क्रमतां पश्चादनुलगिष्यामि।

---

अतिमनोहर इत्यर्थः शोकेन बन्धुविनाशजनितेन दुःखेन वियोगेन प्रियविच्छेदेन आधिना मनोव्यथया पुंस्याधिर्मानसी व्यथेत्यमरः व्याधिना रोगेण च कटुकं दारुणं मध्यं यस्य तथाभूतः तथा वह्निना नरकदुःखेन दारुणः भीषणः परिणामश्चरमावस्था यस्य तथाविधः अतएव दुष्करः केवलं लोकानां दुःखदायकः।

(ख) मातृके मातरिति जननीसम्बोधनम्। उत्सादितः उच्छिन्नः, व्यापादितः विनाशितः। दुर्ग्राह्यं दुःखेन ग्रहणीयं नामधेयं यस्याः स्तादृश्या अस्पृश्यपापत्वादिति भावः। एतां नगरीं वाराणसीमिति शेषः। प्रविशद्भिः वाराणसीमिति शेषः। जन्मान्तरसञ्चिते मयीति शेषः परित्यक्ते अपिरत्याध्याहार्य्यः पुनरपि निष्क्रमतां निर्गच्छतां तेषां काश्या इति शेषः अनुलगिष्यामि अनुप्रवेक्ष्यामि, काश्यां पापस्य दुष्प्रवेश्यत्वात् तत्र प्रविशतां पापानि वहिस्तिष्ठन्ति पुनर्निर्गच्छतां तेषां कर्मवशात् तानि पापानि पुनः शरीरं प्रविशन्तीति भावः।

॥ नेपथ्ये ॥

शम्भोः पादाब्जमुद्रा शिरसि भगवतस्तस्य तादृक् प्रसादः,
पुत्रप्रीतिर्भवान्याः श्रुतमतनु तथा नैष्ठिकं तत् तपो मे।
स्नाय्वस्थि-ग्रन्थि-सारं तदपि वपुरिदं जर्जरं त्वङ्‌निबद्ध'
यत्सत्यं दुर्विलङ्घ्या भवति परिणतिः कर्म्मणाम् प्राक्तनानाम्॥(ग)

पुरुषः ॥ सावष्टम्भम् ॥ आः! अत्थिज्जेव्व एदं, जइ एदाए दुट्ठ-णअलीए से लाआ दुलाआले हलिचंदे ण होदि ॥ सविस्मयम् ॥ के एसे मंतेदि ॥ नेपथ्याभिमुखमवलोक्य ॥ कहं भअवदो विसम-लोअणस्स आसर्ण-पड़िचालके भअवं भिङ्गी इदोएव्व आअच्छदि, ता तुलिअं अवक्कमामि ॥ इति निष्क्रान्तः ॥ (२)

---

(२) आः अस्त्येवैतत्, यदि एतस्या दुष्टनगर्याः स राजा दुराचारो हरिश्चन्द्रो न भवति। क एष मन्त्रयते? कथं भगवतो विषमलोचनस्यासन्न-परिचारको भगवान् भृङ्गी इत एवागच्छति, तत् त्वरितमपक्रामामि।

---

(ग) शम्भोरिति। मम शिरसि भगवतः शम्भोः पादाब्जमुद्रा पादपद्मचिह्नं, तथा तस्य भगवतः तादृक् प्रसादः प्रसन्नता मयीति शेषः भवान्या देव्याः पुत्रप्रीतिः पुत्रवात्सल्यं मयीति शेषः भवानी पुत्रवत् मां स्निह्यतीत्यर्थः। मे मम श्रुतं शास्त्रज्ञानम् अतनु बहुतरं तथा तत् नैष्ठिकं परमं तपः कठोरव्रतं आसीत् येन परमसौख्यं स्यादिति शेषः तदपि तथापि इदं वपुः शरीरं जर्जरं जीर्णतमं त्वङ्‌निबद्धं चर्म्मावनद्धं स्नायवः शिराः अस्थीनि कङ्कालानि ग्रन्थयः सन्धिस्थानानि एव साराः स्थिरांशाः यस्य तादृशं सारो बले स्थिरांशे चेत्यमरः। प्राक्तनानां प्रकृति-

॥ ततः प्रविशति भृङ्गिरिटिः ॥

भृङ्गि ॥ शम्भोरित्यादि पठति ॥ विचिन्त्य ॥ कथमन्यथा राजर्षेर्हरिश्चन्द्रस्यापि दशाविपर्य्ययमद्य देवो देव्यै निवेदितवान् ॥

यस्याद्भुतं कथयतश्चरितं भवस्य
रोमाञ्च-भिन्न-कण-भस्म-घनाङ्गयष्टेः।
व्यावल्गित-भ्रु नयनत्रयमाविरासीद्-
वेल्लच्छशाङ्क-शकलश्चपलश्च मौलिः ॥ (घ)

अद्यासाविह प्रवेक्ष्यतीति समं देव्या देवो मृगाङ्क-मौलिरपि पर्य्युत्सुक एव। तद्यावदहमपि भगवतः पूजां निर्वर्त्य सज्जीभवामि।

---

नियमानां प्राक्तनानामित्यर्थः कर्म्मणां परिणतिः परिणामः दुर्विलङ्घ्या लङ्घयितुमशक्या भवतीति यत् तत् सत्यं नहि कोऽपि प्राक्तनं कर्म्मातिक्रमितुं शक्नोतीति भावः। स्रग्धरावृत्तम्। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः। तदुक्तं दर्पणे। सामान्यं वा विशेषेण विशेषस्तेन वा यदि। कार्य्यञ्च कारणेनेदं कार्य्येण च समर्थ्यते। साधर्म्येणेतरेणार्थान्तरन्यासोऽष्टधा ततं इति।

(घ) यस्येति। यस्य हरिश्चन्द्रस्य अद्भुतम् अलौकिकं चरितं कथयतः अतएव रोमाञ्चेन पुलकेन भिन्नाः विश्लिष्टाः कणा बिन्दवः यस्य तादृशं यत् भस्म तेन घना पूर्णा अङ्गयष्टिः शरीरदण्डः यस्य तथाभूतस्य भवस्य हरस्य नयनत्रयं व्यावल्गिता विशेषेण आवल्गिता चलिता भ्रूर्यस्य तथाभूतं तथा मौलिः शिरः चपलः अतएव वेल्लत् चलत् शशाङ्कशकलं चन्द्रखण्डः यत्र तथाभूतः आविरासीत् अजायत। शार्दूलविक्रीड़ितं वृत्तम्।

॥ इति निष्क्रान्तः ॥ प्रवेशकः ॥ (ङ)

ततः प्रविशति सचिन्तो राजा ॥

राजा ॥

दत्त्वैतां द्विजसत्तमाय वसुधां प्रीत्या प्रसन्नं मनः,
स्मृत्वा ताम्यति दक्षिणां विधिवशाद् वीऽनिर्यातिताम् ।
कर्त्तव्यो न धनागमोऽस्य विषये स्थानं भवानीपते-
राहुर्यन्न वसुन्धरेति तदहं वाराणसीं प्रस्थितः ॥ (च)

चिन्तां नाटयित्वा दीर्घं निःश्वस्य ॥ कष्टं भोः ! कष्टम् !

दाराः सूनुरयं शरीरकमिदं त्यागावशिष्टं त्रयं,

---

(ङ) प्रवेशकः वृत्तवर्त्तिष्यमाणकथांशानां संक्षेपेण नीचपात्रस्य प्राकृतभाषया प्रयोजितः कथाविभागः तदुक्तं दर्पणे प्रवेशकोऽनुदात्तोक्त्या नीचपात्रप्रयोजितः । अङ्कद्वयान्तर्विज्ञेयः शेषं विष्कम्भके यथेति ।

(च) दत्त्वेति । मनः चित्तं ममेति शेषः प्रीत्या द्विजसत्तमाय विश्वामित्राय एतां वसुधां पृथ्वीं दत्त्वा प्रसन्नं प्रसादं गतं किन्तु विधिवशाद् दुर्दैववशात् अनिर्यातिताम् अपरिशोधितां गुर्वीं महतीं सुवर्णलक्षरूपामिति भावः दक्षिणां स्मृत्वा ताम्यति कथमेतां निर्यातयामीति ग्लानिमुपैतीत्यर्थः । अस्य विश्वामित्रस्य विषये राज्ये धनागमः धनोपार्जनं न कर्त्तव्यः तत् प्रतिषिद्धत्वादिति भावः तस्मात् भवानीपतेः यत् स्थानं वसुन्धरेति न आहुः बुधा इति शेषः अहं तत् स्थानं वाराणसीं प्रस्थितः चलितः । शार्दूलविक्रीडितं वृत्तम् ।

(छ) दारा इति । दाराः पत्नी अयं सूनुः पुत्रः इदञ्च शरीरकम् एतत् त्रयं त्यागावशिष्टम् अन्यत् सर्वं त्यक्तं केवलमेतत्त्रयम् अवशिष्यते इत्यर्थः । अद्य अवधिः समयः मासरूपः समाप्तः । सत्य प्रतिज्ञातम् अशरीरयाज्यं परित्यागानर्हम् अवश्यपालनीयमित्यर्थः ।

शश्वासोऽवधिरद्य सत्यमपरित्याज्यं मुनिः कोपनः ।
ब्रह्मस्वोपहृतं च जीवितमिदं न त्यक्तुमप्युत्सहे,
किं कर्त्तव्य-विचार-मूढ़-मनसः सर्वत्र शून्या दिशः ॥ (छ)

॥ अपतोऽवलोक्य सहर्षम् ॥ कथमियं वाराणसी ? भगवति वाराणसि ! नमस्ते ॥ विचिन्त्य साश्चर्यम् ॥

यद्वाञ्छन्ति क्षपित-तमसो ब्रह्मचर्य्यैस्तपोभिः
प्रव्रज्याभि र्युतशमदमा नायकैर्ब्रह्मनिष्ठाः ।
तद्देहान्ते कथयति हरस्तारकं ज्ञानमस्मिन्
प्राणत्यागाद्भवति न पुनर्जन्मने येन जन्तुः ॥ (ज)

अपिच

---

मुनिः विश्वामित्रश्च कोपनः प्रचण्डः नासौ केनापि प्रसादयितुं शक्यते इति भावः ब्रह्मस्वेन ब्राह्मणस्य प्रतिश्रुतस्य अदानेन उपहृतम् इदं जीवितञ्च परित्यक्तु नापि नैव उत्सहे शक्नोमि तस्मात् किं कर्त्तव्य-विचारे किमतःपरं कर्त्तव्यमिति विवेके मूढम् अशक्तम् मनः यस्य तादृशस्य मम सर्वत्र दिशः शून्याः, कां दिशं गन्तव्यमिति न निश्चिनोमीति भावः । शार्दूलविक्रीडितं वृत्तम् ।

(ज) यदिति । ब्रह्मचर्य्यैः यथाविधि वेदाध्ययनादिकर्मभिः युतानां शमादीनां शमानां दमानाञ्च गुणानां नायकैः अविरोधिभिरित्यर्थः तपोभिः व्रतैश्च चान्द्रायणादिभिः क्षपितं नाशितं तमो मोहरूपमज्ञानं यैः तथाभूताः ब्रह्मनिष्ठा ब्रह्मपरायणा योगिन इत्यर्थः प्रव्रज्याभिः सन्यासैः यत् वाञ्छन्ति अभिलषन्ति, अस्मिन् वाराणसीक्षेत्रे हरः शम्भुः देहान्ते मरणसमये तत् तारयतीति तारकं ज्ञानं ब्रह्मज्ञानमित्यर्थः कथयति प्राणिभ्य इति शेषः येन तारकज्ञानेन प्राणत्यागात् जन्तुः जीवः पुनर्जन्मने पुनरावृत्तये पुनः संसारागमनाय इत्यर्थः न भवति पुनः संसारं नागच्छतीत्यर्थः । मन्दाक्रान्तावृत्तम् ।

विमुच्यन्ते जन्तोरिह निविड़-संसार निगड़ाः
शिरस्तद्वैरिञ्चं व्यपतदिह हस्तात् पशुपतेः ।
विमुक्तस्तत्पापादभवदविमुक्तः स भगवान्
न मुक्तं तेनैतत् सह दयितया क्षेत्रमसमम् ॥ (ञ)

---

(ञ) विमुच्यन्त इति । इह वाराणस्यां जन्तोः देहिनः निविडा दृढाः संसारनिगडाः भवबन्धनानीत्यर्थः विमुच्यन्ते । इह तत् वैरिञ्चं ब्राह्मं शिरः पशुपतेः हस्तात् न्यपतत् अच्योतत् । स भगवान् पशुपतिः तत्पापात् ब्रह्महत्यारूपात् अविमुक्तः अत्यक्तोऽपि विमुक्तः तत्पापविरहित इत्यर्थः अभवत् । तेन हेतुना तेन हरेण दयितया पत्न्या पार्वत्या सह एतत् असमम् अतुल्यं क्षेत्रं काशीधाम न मुक्तं न कदाचित् त्यज्यते इति यावत् । पुरा किल ब्रह्मा विष्णुश्च परस्परं अहमेव जगतां सृष्टिस्थितिसंहारप्रवर्त्तकः न मत्तो महान् विद्यते इति विवदमानौ त्रयीमुपागतौ संशयनिरासाय । सा च विचार्य्याभिदधे महेश्वर एव सर्वेषामद्वितीयेश्वरः श्रेष्ठ इति । अथाहङ्कारपरीतेन वेधसोक्तं प्रेतभूमौ निरन्तरं वसन् भूतसहचरः शम्भुः कथं सर्वेश्वरो भवतीति । एवमुक्ते सहसा तत्र भगवान् उमापतिः प्रादुरासीत् । विधाता च तमवलोक्य प्रोवाच भूतपते ! त्वं मे ललाटदेशात् प्रादुर्भूतः, तदानीं रोदनाच्च रुद्र इति मया कृतनामधेयोऽसि, तत् त्वमधुना मामेव शरणं व्रजेति अथासौ भगवान् शङ्करः कोपात् कालभैरवं सृष्ट्वा तस्य शिरश्छेदाय व्यादिदेश । कालभैरवश्च शम्भुशासनात् तत्क्षणमेव पितामहस्य एकं शिरश्चिच्छेद । ब्रह्महत्या च सद्यस्तमाचक्राम । कालभैरवश्च तद्ब्रह्महत्यापरिहाराय शिरःकपालध्वजवान् भिक्षार्थी हस्ते तत् ब्राह्मं शिरः समादाय त्रिलोकीं परिभ्रमन् न कुत्रापि शान्तिं लेभे । ततश्च यदासौ परमधाम विशिष्टां ब्रह्महत्यापापनाशिनीं वाराणसीं प्राविशत् तदासौ ब्रह्महत्या तत्र प्रवेशाक्षमतया तं परितत्यजे शिरश्च तत् वैरिञ्चं हस्तस्थितं तस्य हस्तात् न्यपतत् । इति पौराणिकी गाथात्रानुसन्धेया । शिखरिणीवृत्तम् ।

तत्केनोपायेन मुनेरानृण्यमुपगच्छामि। सचिन्तम्॥

किं जित्वा धनमाहरामि धनदं त्यक्तश्रियः किं जयै-
र्याञ्चादैन्यमपि द्विजातिसुलभं न क्षत्रियाः कुर्वते।
वाणिज्यं धनमूलमस्ति न धनं निष्किञ्चनस्याद्य मे
सर्वं कालमपेक्षते विधिवशान्नैवास्मि कालक्षमः॥ (ञ)

तत्किं करोमि मन्दभाग्यः?॥ समधार्य, सहर्षम्॥ हन्त!
तदहमिदानीम्॥

आत्मानमेव विक्रीय सत्यं रक्षामि शाश्वतम्।
तस्मिन्नरक्षिते नूनं लोकद्वयमरक्षितम्॥ (ट)

---

(ञ) किमिति। धनदं कुबेरं जित्वा किं धनम् आहरामि, त्यक्ता श्रीः येन तादृशस्य मम जयैः किम्?। क्षत्रियाश्च द्विजातिसुलभं ब्राह्मणानां सुगमं याच्ञादैन्यं भिक्षावैक्लव्यं न कुर्वते न कर्त्तुं शक्नु-वन्तीत्यर्थः। वाणिज्येन धनमुपार्ज्यतामित्यत आह वाणिज्यमिति वाणिज्यं धनमूलं मूलधनं विना वाणिज्यं न भवतीत्यर्थः, अद्य नि-ष्किञ्चनस्य निर्धनस्य मे मम धनं नास्ति येनाहं वाणिज्यं कुर्य्यामिति भावः सर्वमन्यत् अर्जनोपाय इत्यर्थः कालम् अपेक्षते, विधिवशात् दुर्दैवात् अस्मि अहं नैव कालक्षमः कालम् अपेक्षितुं न शक्नोमीत्यर्थः मासावधिकत्वेन निरूपितत्वात् दक्षिणादानस्येति भावः। शार्दूलवि-क्रीडितं वृत्तम्।

(ट) आत्मानमिति। आत्मानं स्वदेहं विक्रीय शाश्वतं सनातनं सत्यं सत्यधर्मं रक्षामि पालयामि तस्मिन् सत्ये अरक्षिते सति नूनं निश्चितं लोकद्वयम् ऐहिकं पारत्रिकञ्च इत्यर्थः अरक्षितं स्यादिति भावः इहलोके मां जनाः असत्यवादिनं कथयिष्यन्ति परत्र च निरय-गतिरिति भावः।

॥ सावष्टम्भम् ॥ तद्यावदेव वत्सं रोहिताश्वमनुपालयन्ती दीर्घाध्वविश्रान्ता देवी नागच्छति, तावदेवाहं सत्वरमुपगम्यात्मनः समीहितं सम्पादयामि । ऊर्द्ध्वमवलोक्य ॥ कथं मध्यमङ्कः समारूढो भास्वान् ?

तथाहि ।

तपति तपनस्तीक्ष्णं चण्डः स्फुरन्निव कौशिको
वहति परितस्तापं पन्था यथा मम मानसम् ।
इयमपि पुनश्छाया दीनां दशां समुपस्थिता
हत-विधिवशाद्देवीवाधो निषीदति भूरुहाम् ॥ (ठ)

तदिदमासन्नमवधेः (ड) पर्य्यवसानम्, अथवा हरिश्चन्द्रस्यैव । हा ! हतोऽस्मि मन्दभाग्यः ॥ इति आत्मानं पातयित्वा सहसोत्थाय सनिर्वेदम् ॥ दुरात्मन् हरिश्चन्द्र हतक !

प्रतिश्रुतां सम्प्रति दक्षिणां प्राग्
अपूरयित्वा द्विजसत्तमाय ।

---

(ठ) तपतीति । तपनः सूर्य्यः स्फुरन् कोपेन ज्वलन् कौशिक इव विश्वामित्र इव चण्डः तीव्रः सन् तीक्ष्णं यथा तथा तपति । पन्था मार्गः मम मानसं यथा परितः समन्तात् तापं वहति । इयमपि छाया पुनः तरुप्रभृतीनामिति शेषः हतविधिवशात् दौर्भाग्यात् दीनां दशां दौर्बल्यमिति भावः समुपस्थिता प्राप्ता सती देवीव मम महिषी शैव्येव भूरुहां वृक्षाणाम् अधः निषीदति सङ्कुचिता तिष्ठतीत्यर्थः तदाश्रयणेनापि आत्मविनोदनं न सम्भवतीति भावः । शिखरिणीवृत्तम् उपमालङ्कारः ।

(ड) आसन्नं सन्निहितम् अवधेः मासरूपस्य दक्षिणादानकालस्य पर्य्यवसानम् अन्तः ।

अष्टास्य दग्ध-स्खलितस्य सत्यात्
गमिष्यसि त्वं शठ ! कान् प्रदेशान् ॥ (ढ)

तद्यावद् वणिग्वीथीमवतीर्य्य प्रकृतमनुतिष्ठामि । आगतप्रायेण तेन मुनिना भवितव्यम् ॥ इति सत्वरं परिक्रम्यैकान्ते स्थितः ।

॥ ततः प्रविशति कोपं नाटयन् कौशिकः ॥

कौशिकः ॥

प्रणाशाद्विद्यानां करतल-गतानामुपचितो
निरुद्धो दुर्बुद्धे-विनयमसृणैस्तस्य चरितैः ।
शिखी वेगादन्तर्ज्वलित-घन-शुष्केन्धन-गतो
वहिर्धारासिक्तं विपिनमिव मन्युर्दहति माम् ॥ (ण)

॥ सामर्षम् ॥ दुरात्मन् हरिश्चन्द्रहतक !

---

(ढ) प्रतिश्रुतामिति । हे शठ ! द्विजसत्तमाय प्राक् प्रतिश्रुतां दक्षिणाम् अपूरयित्वा अदत्त्वा सत्याति अष्टास्येन दग्धः सत्यात् स्खलितः भ्रष्टः सन् कान् प्रदेशान् गमिष्यसि ? उपजातिवृत्तम् ।

(ण) प्रणाशादिति । करतलगतानां हस्तगतानां विद्यानां प्रणाशात् व्यपनयनात् उपचितः वृद्धिं गतः दुर्बुद्धेः तस्य राज्ञः विनयमसृणैः शिष्टाचारपेशलैः चरितैः निरुद्धः प्रतिरुद्धः मन्युः कोपः वेगात् अन्तर्ज्वलितानि घनानि सान्द्राणि शुष्काणि इन्धनानि काष्ठानि गतः प्राप्तः शिखी अग्निः वह्निः वहिःप्रदेशे धाराभिः वारिप्रवाहैः सिक्तं दृष्टं विपिनमिव वनमिव मां दहति. वहिर्धारा राज्ञः शिष्टाचार इति बोध्यम् । उपमालङ्कारः । शिखरिणीवृत्तम् ।

पश्यामि यावच्चलितं न सत्या-
द्राज्यादिव स्वादचिराद्भवन्तम्।
त्वद्दुर्नयोद्दीपित-तीव्र-तेजा-
स्तावन्न मे शान्तिमुपैति मन्युः॥ (त)

॥ दृष्ट्वा सविस्मयम्॥ अये! कथमसौ प्राप्त एव दुरात्मा, अथवा महात्मैव। भवतु उपसर्पामि॥ तथा कृत्वा; सक्रोधम्॥ आः! कथमद्यापि न सम्भृतानि मे दक्षिणा-सुवर्णानि?

राजा॥ ससम्भ्रमम्॥ कथं भगवान् कौशिकः?॥ भगवन्! अभिवादये।

कौशिकः॥ धिगनार्य्य! किमद्यापि अलीक-वाङ्मधुर्य्यैरस्मान् वञ्चयितुमिच्छसि?।

राजा॥ कर्णौ पिधाय॥ भगवन्! मर्षय मर्षय।

कौशिकः॥ क्रोधं नाटयित्वा॥ दुरात्मन्! अलीक-(थ) दान-सम्भावना-प्रख्यापित-मिथ्यापौरुषप्रपञ्च! तिष्ठ तिष्ठ॥

पूर्णेऽवधावपि ददासि न दक्षिणां मे
वाग्भिस्तु शुष्कमधुराभिरुपस्थितोऽसि।

---

(त) पश्यामीति। तव दुर्नयेन उद्दीपितं तीव्रं तेजो यस्य तथाविधोऽहम्। स्वात् राज्यादिव अचिरात् सत्यात् चलितं भवन्तं यावत् न पश्यामि, तावत् मे मम मन्युः शान्तिं न उपैति। इन्द्रवज्रावृत्तम्।

(थ) अलीकेति। अलीकया मिथ्याभूतया दानसम्भावनया दानविधानेन प्रख्यापितः मिथ्यापौरुषप्रपञ्चः पुरुषकारविस्तारः येन तत्सम्बुद्धौ।

(द) पूर्णे इति। अवधौ मासरूपे पूर्णेऽपि मे मह्यं दक्षिणां न ददासि, तु केवलं शुष्कमधुराभिः वाग्भिः उपस्थितः आराधितवा-

दत्ताप्रदान-कुपितेन मया विमुक्तः
शापानलस्त्वयि पतत्वयमद्य घोरः॥ (द)

॥ इति शापजलं गृह्णाति ॥

राजा ॥ ससम्भ्रमं पादयोर्निपत्य ॥ भगवन्! प्रसीद प्रसीद, मर्षय मर्षय।

अस्तं रवावसम्प्राप्ते यदि नाप्नोषि दक्षिणाम्।
शापार्हो वा बधार्हो वा स्वाधीनोऽयं जनस्तव॥ (ध)

तत् प्रसीद वणिग्वीथीमवतरावः।

कौशिकः ॥ शापजलमुपसंहृत्य ॥ भवतु तत्रैव गत्वा प्रयच्छ। तद्यावदहमपि द्वितीयं सवनं (न) निर्वर्त्यागच्छामि।

॥ इति निष्क्रान्तः ॥

राजा ॥ सनिर्वेदमात्मगतम् ॥

लोकद्वय-प्रतिभयैक-निदानमेतद्
धिक् प्राणिनामृणमहो! परिणामघोरम्।

---

नवि। अद्य दत्तस्य प्रतिश्रुतस्य अप्रदानेन कुपितः क्रुद्धः तेन मया विमुक्तः घोरः अयं शापानलः त्वयि पततु। वसन्ततिलकं वृत्तम्।

(ध) अस्तमिति। रवौ सूर्ये अस्तम् असम्प्राप्ते सूर्यास्तगमनात् प्रागित्यर्थः यदि दक्षिणां न आप्नोषि, तदा अयं तव स्वाधीनः त्वदायत्तो जनः शापम् अर्हतीति तथोक्तो वा, वधम् अर्हतीति तथोक्तो वा।

(न) सवनं स्नानं निर्वर्त्य सम्पाद्य।

(प) लोकेति। अहो! आश्चर्य्यं, लोकद्वये इह परत्र चेत्यर्थः यत् प्रतिभयं भयङ्करम् अकीर्त्तिनरकरूपं तस्य एकम् अद्वितीयं निदानं कारणभूतम् एतत् प्राणिनां परिणामघोरम् अन्तदारुणम् ऋणं

एकः स एव हि पुमान् परमस्त्रिलोके
क्रुद्धस्य येन धनिकस्य मुखं न दृष्टम् ॥ (प)

॥ परिक्रम्य दृष्ट्वा सहर्षम् ॥ कथमियं वणिग्वीथी ! ॥ शिरसि हस्तं दत्त्वा सावष्टम्भम् (फ) ॥ भो भोः साधवः ! ।

केनापि खलु कार्य्येण गत्यन्तरमपश्यता ।
लक्षेणायं सुवर्णानामात्मा विक्रीयते मया ॥ (ब)

तद् गृह्णन्तु मामार्य्याः ! गृह्णन्तु ॥ आकाशे ॥ किं ब्रूथ ? किमर्थमिदं त्वया दारुणं कर्म्म प्रारब्धमिति ? किमनेनातिनिर्बन्धेन, विचित्रः खल्वयं जीवलोकः ॥ पुनरन्यतो गत्वा केनापीत्यादि पठित्वा ॥ आकाशे ॥ किं ब्रूथ ? का ते शक्तिः, किञ्च ते कर्म्म कीदृशञ्च ज्ञानमिति ? ।

॥ स्मित्वा ॥

यद् यदादिशति स्वामी तत् करोम्यविचारितम् ।
शासनास्खलनं भर्त्तुर्भृत्यस्य परमो गुणः ॥ (भ)

---

धिक् निन्दायां धिक् निर्भर्त्सननिन्दयोरित्यमरः । येन क्रुद्धस्य धनिकस्य महाजनस्य उत्तमर्णस्य अर्थः मुखं न दृष्टं, त्रिलोक्यां स एक एव परम पुमान् महापुरुष इत्यर्थः । वसन्ततिलकं वृत्तम् ।

(फ) सावष्टम्भं सगर्व्वम् ।

(ब) केनेति । केनापि अनिर्वचनीयेन केनचित् कार्य्येण हेतुना गत्यन्तरम् अन्यां गतिम् अपश्यता अनवलोकयता मया सुवर्णानां लक्षेण अयम् आत्मा विक्रीयते ।

(भ) यदिति । स्वामी यत् यत् आदिशति आज्ञापयति तत् तत् अविचारितं करोमि वा नवेति विचारमकृत्वा करोमि, भर्त्तुः स्वामिनः शासनस्य आज्ञायाः अस्खलनं पालनमित्यर्थः भृत्यस्य किङ्करस्य परमः मुख्यः गुणः ।

॥ आकर्ण्य ॥ किं ब्रूथ? भूरितरं मूल्यमुक्तवानसि, तत्पुनस्तावदभिधीयतामिति? ॥ सखेदम् ॥ भो भोः साधवः! क्षत्रिया वयं, न पुनः पुनरभिधातुं जानीमस्तद् गम्यताम् ॥

॥ पुनरन्यतो गत्वा कोनापीत्यादि पठति ॥

॥ नेपथ्ये ॥

अज्जउत्त! मा क्खु मा क्खु अत्तम्भरी (स) होहि। तधा सुहसंविभाइणिं मं मन्दभाइणिं कदुअ सम्पदं का दे संविभाअपरम्मुहदा। ता पसीद, मं जेव्व इमस्सिं कज्जे आरोवेहि, अवच्छिमो दे दाणिं अ पणओ। (२)

राजा ॥ सवैलक्ष्यम् ॥ कथमागतैव देवी! तत्र सम्पन्नमभिलषितम् ॥

॥ ततः प्रविशति बालकेनानुगम्यमाना क्लैव्यं नाटयन्ती शैव्या ॥

---

(२) आर्यपुत्र! मा खलु मा खलु आत्मम्भरी भव। तथा सुखसंविभागिनीं मां मन्दभागिनीं कृत्वा साम्प्रतं का ते संविभाग-पराङ्मुखता। तत् प्रसीद, मामेव अस्मिन् कार्य्ये आरोपय, अपश्चिमस्ते इदानीं च प्रणयः।

---

(स) आत्मेति। आत्मानमेव बिभर्त्तीति आत्मम्भरिः स्वमात्मभरणरत इत्यर्थः। सुखेति सुखस्य संविभागः अंशः अस्या अस्तीति तादृशीं सुखांशभागिनीमित्यर्थः। संविभागेति संविभागे अंशप्रदाने इत्यर्थः पराङ्मुखता वैमुख्यम्! अस्मिन् कार्य्ये यत् त्वं चिकीर्षसीति भावः। अपश्चिम इति इदानीञ्च अधुनापि ते तव प्रणयः अपश्चिमः पूर्ववत् नवीन इति यावत् भवतु इति शेषः। राज्ञां वणिग्वीथीषु विक्र-

॥ शैव्या सकरुणं तथैव पठित्वा सास्रं परिक्रम्य ॥ किणध मं अज्जा ! किणध दूदो अद्धमुल्लेण (य) समग्घदासिं। (४)

बालकः ॥ अज्जा ! मंपि किणध। (५)

राजा ॥ दीर्घमुष्णञ्च निश्वस्य आत्मगतम् ॥ कष्टं भोः कष्टम्।

धारा-सिक्त-तृणाग्र-बिन्दु-तरलाः कामं निरस्ताः श्रिय-
स्त्यक्तास्ते सुहृदोऽश्रु-दीन-वदना नाश्वासिता स्ताः प्रजाः।
दाराणां तनयस्य विक्रयमहो दृष्ट्वापि यच्चेतसा
क्रूरेण स्फुटितं न मेऽद्य हृदयं वज्रेण मन्ये कृतम् ॥(र)

शैव्या ॥ आकाशे कर्णं दत्त्वा ॥ अज्जा किं भणाध ? कीदिसो

---

(४) क्रीणीत मामार्य्याः ! क्रीणीत इतोऽर्द्धमूल्येन समर्घदासीम् ।

(५) आर्य्याः ! मामपि क्रीणीत ।

---

रत्वेन आत्मानं विक्रीय कार्य्यार्थिनमुपस्तुत्य राजमहिष्या उक्तिरियमिति बोद्धव्यम् ।

(य) इतः सुवर्णानां लक्षात् अर्द्धमूल्येन पञ्चाशत्सुवर्णसहस्रेणेत्यर्थः ।

(र) धारेति । धाराभिः वृष्टिभिः सिक्तेषु तृणाग्रेषु ये बिन्दवः जलकणाः तद्वत् तरलाश्चपलाः श्रियः राजसम्पदः कामं सम्यक् निरस्ताः त्यक्ताः, अश्रुभिः दीनानि म्लानानि वदनानि येषां तथाविधाः सुहृदः मित्राणि त्यक्ताः, ताश्च प्रजाः न आश्वासिताः न सान्त्विताः। अहो आश्चर्यं दाराणां धर्मपत्न्याः तनयस्य पुत्रस्य च विक्रयं दृष्ट्वापि क्रूरेण मे चेतसा अद्य यत् न स्फुटितं न विदीर्णं तत् तस्मात् हृदयं वज्रेण कृतं घटितं मन्ये सम्भावयामि। शार्दूलविक्रीड़ितं वृत्तम् ।

दे समओ त्ति ? परपुरिस-पज्जुवासणं परुच्छिट्ट भोअणं परिहरिअ सव्वकज्जकारिणी त्ति। ईदिसो मे समओ (ल) ॥पुनः कर्णं दत्त्वा॥ किं भणाव ? को तुम्हं इमिणा समएण्ण किणिस्सदि त्ति ?। ता गच्छध पसीदध, किं तुम्हाणं इमिणा पओअणं। दिअवरो दीणजणाणुकम्पी अण्णो वा कोवि साहू मं किणिस्सदि। (६)

ततःप्रविशति उपाध्यायो वटुश्च॥

उपा॥ वत्स कौण्डिन्य ! सत्यमेवापणे दासी विक्रीयते।

वटुः॥ किं अलिअं उअज्झाओ विण्णवीअदि। (७)

उपा॥ तेन हि तत्रैव गच्छावः।

वटुः॥ जं उअज्झाओ आणवेदि। एदु एदु उअज्झाओ एदु एदु। (८)

उपा॥ परिक्रम्य दृष्ट्वा॥ आश्चर्य्यम्। अहो ! रामणीयकं वीथ्याः। (व)

---

(६) आर्य्याः ! किं भणत ? कीदृशस्ते समय इति ?। परपुरुष-पर्य्युपासनं परोच्छिष्टभोजनं परिहृत्य सर्व्वकार्य्यकारिणीति। ईदृशो मे समयः। किं भणत ? कस्तावत् अनेन समयेन क्रेष्यतीति ?। तद्गच्छत, प्रसीदत किं युष्माकम् अनेन प्रयोजनम्। द्विजवरो दीनजनानुकम्पी अन्यः कोऽपि साधुर्मां क्रेष्यति।

(७) किमलीकमुपाध्यायो विज्ञाप्यते।

(८) यदुपाध्याय आज्ञापयति। एतु एतु उपाध्यायः एतु एतु।

---

(ल) समयः कार्य्यनियमः।

(व) वीथ्याः विपणिमार्गस्य।

तथाहि।

हेम्ना मेरु-वसुन्धरेव जलधे-र्वेलेव रत्नैरियं
नागैर्बाल-पयोद-विभ्रमधरै-र्विन्ध्यस्थलीवोन्मदैः।
इत्थं प्रार्थितमर्थिनां विदधती दिव्यांशुकोत्पल्लवा
सेयं कल्पलतेव कस्य विपणिर्लोलं विधत्ते मनः॥ (ग)

वटुः॥ उअज्झाअ! जहिं एसो गरुओ जणसंमद्दो दीसइ तहिं तीए होदव्वं त्ति तक्केमि॥ उपसृत्य॥ अज्जा! अन्तरं अन्तरं। (९)

उपा॥ अहो! अतिबलवान् संमर्दः (घ)।

मैत्र्या॥ सवैलक्ष्यम्॥ किणध मं अज्जा! किणध॥ इत्यादि पुनः पठति॥ (१०)

---

(९) उपाध्याय! यत्रैष गुरुको जनसम्मर्दो दृश्यते तत्र तया भवितव्यमिति तर्कयामि। आर्य्याः! अन्तरम् अन्तरम्।

(१०) क्रीणीत मामार्य्याः! क्रीणीत।

---

(ग) हेम्नेति। इयं विपणिः पण्यवीथिका हेम्ना स्वर्णसम्भारेणेत्यर्थः मेरुवसुन्धरेव सुमेरुपर्वतभूमिरिव, रत्नैः रत्नराशिभिः जलधेः समुद्रस्य वेलेव तीरभूमिरिव बाला अभिनवा ये पयोदा मेघास्तेषां विभ्रमधरैः तत् सदृशैरित्यर्थः उन्मदैः मदस्राविभिः। नागैः हस्तिभिः विन्ध्यस्थलीव विन्ध्याचलस्थलीव। इत्थम् अर्थिनां प्रार्थितम् अभिलषितं विदधती यो यदभिलषति तस्मै तत् समर्पयन्तीत्यर्थः दिव्यैः अंशुकैः वसनैः उत्पल्लवा उद्गतपल्लवा दिव्यांशुकान्येव पल्लवान् धारयन्तीति भावः कल्पलतेव कल्पतरुरिव सा इयं वीथी कस्य मनः लोलं सतृष्णं द्रव्यग्रहणसमुत्सुकमित्यर्थः न करोति? अपि तु सर्वस्यैव करोतीत्यर्थः। शार्दूलविक्रीड़ितं वृत्तम्।

(घ) सम्मर्दः जनतेत्यर्थः।

बाल: ॥ मम्पि ।

उपा ॥ दृष्ट्वा साश्चर्य्यम् ॥ कथमियं सा ? भवति ! कीदृ-शस्ते समयः ?

शैव्या ॥ परपुरिस पज्जुवासणं परुच्छिट्ट-भोअणं परि-हरिअ सव्व-कम्मकारिणी त्ति । (११)

बाल ॥ मम्पि । (१२)

उपा सहर्षम् ॥ सुष्ठु खल्वयन्ते समयः । तदनेनैव समये-नास्मद्गृहे विश्रम्यताम् । पत्नी ममाग्नि-परिचर्य्या परा-धीनतया न सम्यग्गृहाविचारक्षमा । तद् गृह्यतां सुवर्णम् ।

शैव्या ॥ सहर्षम् ॥ अणुगहिदह्मि, जं अज्ज आणवेदि त्ति । (१३)

उपा ॥ चिरमवलोक्य सविषादमात्मगतम् ॥

शिरो यदवगुण्ठितं, सहज-रूढ़-लज्जानतं
गतञ्च परिमन्थरं, चरणकोटिलक्ष्ये दृशौ ।

---

(११) परपुरुष-पर्य्युपासनं परोच्छिष्ट-भोजनं परिहृत्य सर्व्वकर्म्म-कारिणीति ।

(१२) मामपि ।

(१३) अनुगृहीतास्मि । यदार्य्यः आज्ञापयति ।

---

(स) शिर इति । यत् यतः शिरः मस्तकम् अवगुण्ठितं वसनेना-च्छादितं तथा सहजया रूढया जातया लज्जया आनतं विनतं, गतं गमनं परि सर्व्वतः मन्थरम् अनुद्धतं, दृशौ नेत्रे च चरणकोटिः चर-णाग्रं लक्ष्यं ययोः तादृशे यच्च मधुराणि मन्दमन्दानि अतिकोम-लानि अक्षराणि यस्मिन् तादृशं परिमितम् अल्पाल्पं वचः वचनम् ।

वचः परिमितं च यन्मधुर-मन्दमन्द्राक्षरं,
निजं तदियमङ्गना वदति नूनमुच्चैः कुलम्॥ (स)

॥ सचिन्तम्॥ न युक्तमस्याकृतिविशेषस्येदमवस्थान्तरम्। तत् कथमिमां दशामनुप्राप्ता। भवत्वेवं तावत्॥ प्रकाशम्॥ अयि! जीवति ते भर्त्ता?।

शैव्या॥ शिरसा संज्ञां ददाति।

राजा॥ निश्वस्यात्मगतम्॥ कथं जीवति?। जीवतः किल कलत्रस्येदमवस्थान्तरम्।

उपा॥ अपि सन्निहितः स्यात्?।

शैव्या॥ सास्रं राजानमवलोकयति।

उपा॥ दृष्ट्वा सविस्मयम्॥ अये! कथमयमस्या भर्त्ता॥ चिरं निर्वर्ण्य सखेदम्॥

वृषस्कन्धं मत्त-द्विरद-कर-पीनायतभुजं
वपु-र्व्यूढोरस्कं ननु भुवन-रक्षा-क्षममिदम्।
द्वयं मौलौ चूड़ामणि-समुचिते किन्त्विदमहो
नरं वामारम्भं कमिव न विधाता प्रहरति॥ (ह)

---

तत् तस्मात् इयम् अङ्गना नारी निजम् उच्चैः उन्नतं कुलं नूनं निश्चितं वदति प्रकटयति अथवा नूनं मन्ये। शिखरिणीवृत्तम्।

(ह) वृषेति। इदं वपुः शरीरं वृषस्येव स्कन्धौ यस्य तादृशं मत्तः मदस्रावी यः द्विरदः गजः तस्य करः शुण्डादण्डः तद्वत् पीनः स्थूलः आयतः दीर्घश्च भुजः यस्य तथोक्तं व्यूढं विशालम् उरः वक्षःस्थलं यस्य तथाविधं भुवनानां जगतां रक्षायां क्षमं समर्थं खलु निश्चितं, चूड़ामणिसमुचिते किरीटरत्नयोग्ये मौलौ शिरसि इदं द्वयं किं नु किं खलु कथमेतदित्यर्थः अहो! आश्चर्यं वामः प्रतिकूलः आरम्भः कर्म

॥ उपसृत्य सास्रम् ॥ भो महात्मन् ! स्वदुःख-(च)सम्भाग-विभागिनं मां कर्त्तुमर्हसि । तत् कथ्यतां किमर्थमेवं त्वयारब्धमिति ।

राजा विचिन्त्य सर्वैक्वव्यसनागतम् ॥ न युक्तमस्य साधोर्वचनमन्यथाकर्त्तुम् ॥ प्रकाशम् ॥ भोः साधो ! न विस्तर(क)-स्येदानीं देशकालौ । ततः समासतः कथयामि श्रूयताम् । ब्रह्मस्वपीड़ितेनेदं मया प्रारब्धम् । अतःपरं न ममातिनिर्बन्धयितुमर्हसि ।

उपा ॥ तेन हि तत् प्रतिग्टह्यतां नो धनम् ।

राजा ॥ कर्णौ पिधाय ॥ भो भोः साधो ! प्रथम-(ख)वर्ण-वृत्तिरियं प्रतिषिद्धास्मद्विधानाम् । तद्यदि मामनुकम्पनीयं मन्यसे, तन्मूल्यसम्बन्धेन दातुमर्हसि ।

शैव्या ॥ ससम्भ्रममुपगम्य सविनयमञ्जलिं बद्धा ॥ णार्हदि मं पढ़मोवगदं अज्जो अदिक्कमिदुं । ता अणुगेह्णदु मं, एसम्हि दे सरणागदा । (१४)

---

(१४) नार्हति मां प्रथमोपगतामार्य्योऽतिक्रमितुम् । तदनुगृह्णातु माम् एवास्मि ते शरणागता ।

---

यस्य तथाभूतः प्रतिकूलकारी विधाता कमिव जनं न प्रहरति अपितु सर्वमेवेत्यर्थः । शिखरिणीवृत्तम् ।

(च) स्वदुःखेति । स्वं दुःखं स्वदुःखं तस्य सम्भागः अंशः तस्य विभागिनम् अंशिनम् ।

(क) विस्तरस्य विस्तारितकथनस्य ।

(ख) प्रथमवर्णेति प्रथमवर्णस्य ब्राह्मणस्य वृत्तिः जीविका इयं प्रतिग्रहरूपेत्यर्थः ।

उपा ॥ सास्रम् ॥ भवति !

लक्षार्द्धं यदिदं हेम्नां युवयोरेव तद्धनम्।

परस्परानुरोधेन यद्युक्तं तद्विधीयताम् ॥ (ग)

इति धनमर्पयति ॥

शैव्या ॥ गृहीत्वा ॥ सहर्षम् ॥ दिट्ठिआ अद्धावसिट्ठ पड़िस्साभारो दाणिं अज्जउत्तो ता किदत्थह्मि। (१५)

उपा ॥ स्वगतम् ॥ न युक्तमिदानीमनयोर्वैक्लव्यमवलोकयितुम् ॥ इति निर्गन्तुमिच्छति।

शैव्या। मुहुत्तअं पड़िवालेदु अज्जो, जाव अज्जउत्तं सुसंदिट्ठं करेमि। (१६)

उपा ॥ एष कौण्डिन्यस्तिष्ठति। इति निष्क्रान्तः ॥

शैव्या ॥ राज्ञः पटे धनं बद्धा ॥ अणुमण्णदु मं एदस्स दिअवरस्स दासित्तणे अज्जउत्तो। (१७)

राजा ॥ सवैक्लव्यम् ॥ नन्वनुमतमेव प्रभवतो विधेः ॥ सोपालम्भमात्मगतम्। आकाशे ॥ ननु भो हतविधे !

---

(१५) दिष्ट्या अर्द्धावशिष्ट-प्रतिज्ञाभार इदानीम् आर्य्यपुत्रः, तत् कृतार्थास्मि।

(१६) मुहूर्त्तं प्रतिपालयत्वार्य्यः, यावदार्य्यपुत्रं सुसंदृष्टं करोमि।

(१७) अनुमन्यतां माम् एतस्य द्विजवरस्य दासीत्वे आर्य्यपुत्रः।

---

(ग) लक्षार्द्धमिति। यदिदं हेम्नां सुवर्णानां लक्षार्द्धं पञ्चाशत्-सहस्रसुवर्णानि इत्यर्थः मया दीयते इति शेषः तत् युवयोः एव धनं, परस्परानुरोधेन अन्योन्याभिमतमनुसृत्य यत् युक्तं तत् विधीयतां क्रियताम्।

देवीभावं नीत्वा परगृह-परिचारिका कृता यदियम्।
तदिदं चूड़ारत्नं चरणाभरणत्वमुपनीतम् ॥ (घ)

॥ सविशेषकरुणम् भोः कष्टं!

मम विधि-निहतस्य मन्दबुद्धे-
र्ध्रुवममुना सुत-दार-विक्रयेण।
निज-कुल-परिवाद-नम्र-मूर्त्ते-
रपि सवितुर्मलिनीकृता मुखश्रीः ॥ (ङ)

॥ आत्मानं संस्तभ्य ॥ प्रकाशम् ॥ प्रिये!

आराध्योऽयं ब्राह्मणस्ते सशिष्यः
पत्नी चास्य प्रीतिदायोपचर्य्या।
रक्ष्याः प्राणा बालकः पालनीयो
यद्यद्दैवं शास्ति तत्तद्विधेयम् ॥ (च)

---

(घ) देवीति यत् इयं शैव्या देवीभावं नीता महादेवीपदे प्रतिष्ठितापि परगृहपरिचारिका कृता त्वयेति शेषः, तत् इदं चूड़ारत्नं शिरोमणिः चरणाभरणत्वम् उपनीतं प्रापितम्। दृष्टान्तालङ्कारः। तदुक्तं दर्पणे दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिविम्बनमिति।

(ङ) ममेति। ध्रुवं मन्ये विधिनिहतस्य दैवहतस्य मन्दबुद्धेः मूढ़मतेः मम अमुना सुतदारविक्रयेण पुत्रकलत्रविक्रयेण निजकुलस्य स्ववंशस्य परिवादेन कलङ्केन नम्रा मूर्त्तिर्यस्य तादृशस्य सवितुः सूर्य्यस्यापि मुखश्रीः मलिनीकृता। पुष्पिताग्रावृत्तम्।

(च) आराध्य इति। अयं सशिष्यः ब्राह्मणः ते तव कर्त्तरि षष्ठी आराध्यः सेव्यः, अस्य ब्राह्मणस्य पत्नी प्रीतिदायेन प्रीतिविधानेन उपचर्य्या आराधनीया। प्राणाः स्वा इति शेषः रक्ष्याः दुःखेन आत्मघातिनी मा भवेति भावः। बालकः शिशुश्चायं पालनीयः। दैवस्य

शैव्या ॥ जं अज्जो आणवेदि ॥ इति निर्गन्तुमिच्छति राजानमवलोक्य वैक्लव्यं नाटयति। (१८)

वटुः ॥ सक्रोधम् ॥ आअच्छ भोदी! आअच्छ, दूरं गदो उअज्झाओ। (१९)

शैव्या ॥ ॥ सानुनयम् ॥ मुहुत्तअं पड़िबालेसु मं, जाव अहं अज्जउत्तमुहं सुदिट्टं करेमि। (२०)

राजा ॥ वैक्लव्यं नाटयित्वा ॥ प्रिये! विरम्यतां दुःखमास्ते ब्राह्मणः।

शैव्या ॥ राजानमवलोकयन्ती शनैः परिक्रामति।

बालकः ॥ आवुक (क)। कहिं अम्बा गच्छदि। (२१)

राजा ॥ सखेदम् ॥ यत्र ते पितुः कलत्रं दासी भूत्वा गच्छते।

बालकः ॥ अरे वटुअ! कहं तुमं अम्बं णेदुमिच्छसि ॥ इति मातुः पटान्तं धारयति। (२२)

---

(१८ तदार्य्यपुत्र आज्ञापयति।

(१९) आगच्छ भवति! आगच्छ, दूरं गत उपाध्यायः।

(२०) मुहूर्त्तं प्रतिपालय माम्। यावदहम् आर्य्यपुत्रमुखं सुदृष्टं करोमि।

(२१) आवुक! कुत्र अम्बा गच्छति।

(२२) अरे बटो! कुत्र त्वमम्बां नेतुमिच्छसि?

---

यत् यत् शास्ति आज्ञापयति तत्तत् विधेयं कर्त्तव्यं दुर्दैववशात् कर्त्तुमशक्यमपि करणीयमिति भावः।

(क) आवुक तात।

वटुः ॥ सकोपम् ॥ अपेहि गर्भदास ! (ञ) । इति चित्वा पातयति । (२३)

बालकः ॥ साधरभङ्गं पितरौ पश्यति ।

उभौ ॥ सास्रमवलोकयतः ।

राजा ॥ भो ब्राह्मण ! अनपराद्धं किल शैशवं, तन्नार्हस्येवं कर्त्तुम् ॥ बालकमुत्थाप्य शिरस्याघ्रायालिङ्ग्य च ॥ सवैक्लव्यम् ॥

किं वत्स ! मन्युभर-विस्फुरिताधरोष्ठः
पापस्य पश्यसि मुखं मम निर्घृणस्य ।
येषां प्रिया न शिशवः पिशिताशनानां
तेषामपि प्रियतमा वनिता तिरश्चाम् ॥ (झ)

तत् किं मां चाण्डालमनुगच्छसि, मातरमेवानुगच्छ ॥ इति वैक्लव्यं नाटयति ।

---

(२३) अपेहि गर्भदास !

---

(ञ) गर्भदास ! दासीपुत्र ! ।

(झ) किमिति । हे वत्स ! मन्युभरेण शोकातिशयेन विस्फुरितः विकम्पितः अधरोष्ठः यस्य तथाभूतः सन् निर्घृणस्य निर्दयस्य पापस्य मम किं कथं मुखं पश्यसि ? येषां पिशिताशनानां मांसभोजिनां श्वापदानामिति शेषः शिशवः प्रिया न, तेषामपि तिरश्चां पशूनां वनिता प्रियतमा भवति, तिर्य्यञ्चो हि शिशून् नाद्रियन्ते केवलं वनिता एव, अहन्तु शिशुं वनिताञ्च न प्रतिपालयामीत्यहो तिर्य्यग्भ्योऽपि निकृष्टोऽहमिति भावः । वसन्ततिलकं वृत्तम् ।

शैव्या ॥ अज्जउत्त! किं मं मन्दभाइणिं अणुसोअन्तो महेसिणो कज्जं सिढिलेसि (२४) ॥ इति बालकं गृहीत्वा परिक्रामति।

॥ ततः प्रविशति कौशिकः ॥

कौशिकः ॥ आः! कथमद्याधुनापि न मे सम्भृतानि दक्षिणासुवर्णानि?

राजा ॥ श्रुत्वा ससम्भ्रममुत्थाय ॥ भगवन्! गृह्यतां तावदर्द्धम्।

कौशिकः ॥ आः कृतं अर्द्धेन। यदि प्रतिश्रुतमवश्यं देयं मन्यते भवान्, तन्निःशेषमेव प्रयच्छ।

॥ नेपथ्ये ॥

धिक् तपो धिग् व्रतमिदं धिग्ज्ञानं धिग् बहुश्रुतम्।
नीतवानसि यद् ब्रह्मन्! हरिश्चन्द्रमिमां दशाम् ॥(ञ)

कौशिकः ॥ श्रुत्वा सक्रोधम् ॥ आः के पुनरमी धिक् शब्देन मां गर्हयन्ति। ॥ ऊर्द्ध्वमवलोक्य ॥ अये! कथममी विमानचारिणो विश्वेदेवाः ॥ क्रोधं नाटयित्वा, कमण्डलुवारिणोपस्पृश्य, शापजलं गृहीत्वा ॥ धिगनात्मज्ञाः(ट)! अरेरे क्षुद्र क्षत्रिय-पक्षपातिनः!

---

(२४) आर्य्यपुत्र! किं मां मन्दभागिनीं अनुशोचन् महर्षेः कार्य्यं शिथिलयसि।

---

(ञ) धिगिति। हे ब्रह्मन्! तपः धिक् व्रतमिदं धिक् ज्ञानं विद्यां धिक्, बहुश्रुतं बहुशास्त्रसमालोचनञ्च धिक् ते इति सर्वत्र योज्यं यत् हरिश्चन्द्रम् इमां दशां नीतवानसि।

(ट) अनात्मज्ञाः आत्मानम् अजानन्तः आत्मज्ञानवर्जिता इत्यर्थः।

पञ्चानामपि वो जन्म चत्रयोनौ भविष्यति।
तथापि ब्राह्मणो द्रौणिः कुमारान् वो हनिष्यति ॥ (ठ)

पुनरूर्द्ध्वमवलोक्य सहर्षम् ॥ अये! कथममी।

मद्दृष्टिपात-भयकम्पित-लोल-घण्टा-
टङ्कार-पूरित-वियत्-स्खलतो विमानात्।
वेल्लद्ध्वजांशुक-विदष्ट-किरीट-कोटि-
प्रभ्रष्ट-कुण्डलमवाङ्मुखमापतन्ति ॥ (ड)

राजा ॥ ऊर्द्ध्वमवलोक्य सभयम् ॥ अहो! प्रभावस्तपसां स्थाने खलु क्लिश्यति हरिश्चन्द्रः। भगवन्! अलमन्यथा सम्भावितेन।

गृह्यतामर्ज्जितमिदं भार्य्या-तनय-विक्रयात्।
शेषस्यार्थे करिष्यामि चाण्डालेऽप्यात्मविक्रयम् ॥ (ढ)

---

(ठ) पञ्चानामिति। पञ्चानामपि वः युष्माकं जन्म चत्रयोनौ भविष्यति यूयं चत्रकुलप्रसूता भविष्यथ इत्यर्थः तथापि किन्तु द्रौणिः द्रोणाचार्य्यसुतः ब्राह्मणः अश्वत्थामा वः युष्माकं कुमारान्, पञ्चेति शेषः हनिष्यति सौप्तिके इति भावः।

(ड) मदिति। मम दृष्टिपातात् यत् भयं तेन कम्पिता लोला या घण्टा विमानबद्धेति भावः तस्याः टङ्कारेण पूरितात् व्याप्तात् वियतः गगनात् स्खलतः पततः विमानात् व्योमयानात् वेल्लत्सु चलत्सु ध्वजांशुकेषु पताकासु विदष्टा लग्नाः किरीटानां कोटयः यत्र तत् प्रभ्रष्टानि विच्युतानि कुण्डलानि यस्मिन् तत् तथा अवाञ्चि अधोवर्त्तीनि मुखानि यस्मिन् तत् यथा तथा आपतन्ति भ्रश्यन्ति। वसन्ततिलकं वृत्तम्।

(ढ) गृह्यतामिति। भार्य्यातनयविक्रयात् अर्ज्जितं लब्धम् इदं

कौशिकः ॥ सक्रोधम् ॥ (ण)कृतमर्द्धेन न्वशेषमेव दीयताम् ।

राजा ॥ भोः साधवः ! ॥ केनापीत्यादि पठति ।

ततः प्रविशति चाण्डालवेशः सानुचरो धर्मः ॥

धर्मः ॥ स्वगतम् ॥

मया ध्रियन्ते भुवनान्यमूनि
सत्यञ्च मां तत्सहितं बिभर्त्ति ।
परीक्षितुं सत्यमतोऽस्य राज्ञः
कृतो मया जातिपरिग्रहोऽयम् ॥ (त)

चिरं ॥ ध्यात्वा साश्चर्य्यम् ॥ प्रणिधानतोऽप्यहं पश्यन् तस्य राजर्षे-र्हरिश्चन्द्रस्य तुल्यं न पश्यामि । भवतु तत् सकाशमेव गच्छामि । परिक्रम्य प्रकाशम् ॥ अले शालमेअका (थ) ! गहिदे तए अत्थपेट्टालके ? । (२५)

---

(२५) अरे सारमेय ! गृहीतस्त्वया अर्थपेटाकः ?

---

सुवर्णलक्षार्द्धं गृह्यताम् । शेषस्य अवशिष्टस्य सुवर्णलक्षार्द्धस्य कृते चाण्डालेऽपि आत्मविक्रयं करिष्यामि ।

(ण) कृतम् अलम् ।

(त) मयेति । मया अमूनि भुवनानि ध्रियन्ते रक्ष्यन्ते, सत्यञ्च तत्सहितं त्रिभुवनसहितं मां बिभर्त्ति रक्षति । अतः अस्य राज्ञः सत्यं परीक्षितुं सर्वथा द्रष्टुं मया अयं जातिपरिग्रहः चाण्डालजातिग्रहणं कृतः । उपजातिवृत्तम् ।

(थ) सारमेय इति । अनुचरनामैतत् । अर्थपेटाकः अर्थानां धनानां पेटाकः भाजनविशेषः पेटरा वा पेड़ा इति भाषा ।

अनुचरः॥ महहलआ! किं तए शुवस्सागाले कादव्वे आदु शुले पादव्वे? (२६)।

धर्मः॥ अले! किं तव एदिणा पुच्छिदेण पओअणं॥ (२७) इति परिक्रामति।

राजा॥ केनापीत्यादि पठति। लब्धाद्र्येत्यादि पठति च सर्वतो-ऽवलोक्य सखेदम्। कथं मया मन्दभाग्येन न कश्चिदर्थी (ट) हा हतोऽस्मि!। इति मूर्च्छितः पतति।

धर्मः॥ आकर्ण्य दृष्ट्वा स्वगतम्॥ कथमसौ महासत्त्वो मोह-मुपगतस्तिष्ठति। भवत्वेवं तावत्॥ ससम्भ्रममुपगम्य प्रकाशम्॥ अले! उत्थे हि अंहके तए अत्थी।। गेह्ण एदं जधापत्थिदं शुवस्सं। (२८)

राजा॥ सहर्षमुत्थाय॥ भोः साधो! उपनीयताम्॥ दृष्ट्वा सविषादम्॥ भद्र! भवानर्थी?।

धर्मः॥ वाढं हगे तए अत्थी। (२९)

राजा॥ तत् को भवान्?।

---

(२६) महत्तर! किं त्वया सुवर्णागारं कर्त्तव्यम्? अथवा सुरा पातव्या।

(२७) अरे! किं तव एतेन पृष्टेन प्रयोजनम्।

(२८) अरे! उत्तिष्ठ अहं तवार्थी, तद्गृहाणेदं यथाप्रार्थितं सुवर्णम्।

(२९) वाढम्, अहमेव तव अर्थी।

---

(ट) न कश्चिदर्थीति। कोऽपि मां यहीतुं नार्थयते इति भावः।

धर्मः ॥

सव्व-मसाणाहिवई गुम्मट्ठाणाधिआणं पच्चइदे ।

वज्झट्टाण-णिउत्ते चण्डाल-महत्तले-क्खु हगे ॥ (२०)(ध)

राजा ॥ सावेगमपसृत्य कौशिकस्य पादयो र्निपत्य ॥ भगवन् ! प्रसीद, भगवन् ! प्रसीद ।

तवैव दासतां गत्वा वरमानृण्यमस्तु मे ।

न दृष्टा न श्रुता चेयं ब्रह्मन् ! चाण्डालदासता ॥ (न)

कौशि ॥ धिङ्मूर्ख ! स्वयं दासास्तपस्विनः (प) । तत् किं त्वया दासेन मे क्रियते ।

राजा ॥ सानुनयम् ॥ भगवन् ! यदादिशसि, तत् करिष्ये ।

कौशिकः ॥ शृण्वन्तु शृण्वन्तु विश्वे देवाः । यदादिशामि तत्करिष्यसि ?

राजा ॥ बाढ़ं करोमि ।

---

(२०) सर्वश्मशानाधिपतिर्गुल्मस्थानाधिपानां प्रत्ययितः ।

वध्यस्थाननियुक्तश्चण्डाल-महत्तरः खल्वहम् ।

---

(ध) सर्वेषां श्मशानानाम् अधिपतिः स्वामी, गुल्मस्थानाधिपानां राजनियुक्तदण्डविधानाध्यक्षाणां प्रत्ययितः विश्वस्तः, वध्यस्थाननियुक्तः वध्यानां वधदण्डार्हाणां वधे नियुक्तः चण्डालेषु महत्तरः श्रेष्ठः ।

(न) तवेति । ब्रह्मन् ! तवैव दासतां किङ्करत्वं गत्वा प्राप्य वरं मे मम आनृण्यम् ऋणविमुक्तिः अस्तु भवतु, इयं चाण्डालदासता न दृष्टा न श्रुता च ।

(प) तपस्विनः स्वयं दासाः तपस इति भावः ।

कौशि॥ यद्येवमस्मिन्नेवार्थिनि (फ) विक्रीयात्मानं प्रयच्छ मे दक्षिणा-सुवर्णानि।

राजा॥ सवैलक्ष्यमात्मगतम्॥ अहह! का गतिरिदानीम्॥

प्रकाशम्॥ भगवन्! यदादिशसि। चण्डालमुपगम्य भोः स्वजातिमहत्तर! समयेन (ब) मां क्रेतुमर्हसि।

चण्डालः॥ अध कीदिशे दे शमए। (३१)

राजा॥ श्रूयताम्।

भैक्ष्याशी दूरतस्तिष्ठन् रथ्याम्बर-परिच्छदः।

यद्यदादिशति स्वामी तत् करोम्यविचारितम्॥ (भ)

उभौ सपरितोषम्॥ अले शुद्धु एशे दे शमए गेह्ल एदं शुवस्सं। (३२) इति दूरादर्पयति।

राजा॥ गृहीत्वा सहर्षम्॥

(३१) अथ कीदृशस्ते समयः?

(३२) अरे! शुद्ध एष ते समयः। गृहाणेदं सुवर्णम्।

(फ) अर्थिनि त्वत्प्रार्थके चाण्डाले इत्यर्थः।

(ब) समयेन नियमेन।

(भ) भैक्ष्याशीति। अहं भैक्ष्याशी भिक्षान्नभोजी दूरतः तवेति शेषः तिष्ठन् स्वामस्पृशन्नित्यर्थः रथ्याया मार्गस्य यत् अम्बरं वसनं रथ्यास्थितं यत् वसनखण्डमित्यर्थः तदेव परिच्छदः वेशः यस्य तथाभूतः सन् स्वामी भवान् यत् यत् आदिशति तत् तत् अविचारितं विना विचारेणैव करोमि।

अनृणस्य ममेदानीमशमस्य द्विजन्मना।
अपरिभ्रष्ट-सत्यस्य श्लाघा चाण्डाल-दासता॥ (म)

कौशिकं प्रति सानुनयम्॥ भगवन्! प्रतिगृह्यतामिदमशेषं धनम्।

कौशि॥ सवैलक्ष्यम् (य)॥ दास्यसि?।

राजा॥ सानुनयम्॥ भगवन्! गृह्यताम्।

कौशि॥ परिगृह्य स्वगतम्॥ किमतःपरं निर्बन्धेन भवतु गच्छामि॥ सवैलक्ष्यं तथा करोति

राजा॥ सविनयमञ्जलिं बद्धा॥ भगवन्! कालक्षेपकृतस्त्वपराधो मां प्रति मर्षणीयः।

कौशिकः॥ क्षान्तम्। इति निष्क्रान्तः॥

राजा चण्डालमुपगम्य॥ भोः स्वजातिमहत्तर! इत्यर्द्धोक्ते मुखं मार्ष्टीति॥ भोः स्वामिन्! आज्ञापय किं मया दासेन कर्त्तव्यम्।

धर्मः॥ सपरितोषमात्मगतम्। यन्न (र) दृष्टपूर्वं न वा श्रुतपूर्वं कर्म्म। प्रकाशम्॥ अले! दक्खिण-मशाणं गदुअ मडअ-

---

( ३२ ) अरे! दक्षिणश्मशानं गत्वा मृतचीरहारकेण भूत्वा

---

(म) अनृणस्येति। इदानीम् अनृणस्य अतएव द्विजन्मना ब्राह्मणेन विश्वामित्रेण अशमस्य अपरिभ्रष्टं सत्यं यस्य तादृशस्य मम चाण्डालदासता श्लाघा प्रशंसा।

(य) सवैलक्ष्यं सलज्जम्।

(र) यन्नेति। त्वदेति शेषः।

चीड़ हाड़केण (ल) भविश्र अहोलत्तं जग्गिदव्वं अहम्मि स्सभवणं जेव्व गच्छामि ॥ (३३)

राजा । यथाज्ञापयति स्वामी । इति निष्क्रान्ताः सर्वे ॥

॥ इति आर्य्यक्षेमीश्वरकृते चण्डकौशिक-नाटके ॥

तृतीयोऽङ्कः ॥

---

## अथ चतुर्थोऽङ्कः ।

॥ ततः प्रविशति चण्डालाभ्यामनुगम्यमानः

सचिन्तो राजा ।

चण्डालौ ॥ ओशलध अज्जा ! ओशलध ण होइ एशे वज्भे ता किं एत्थ पेक्खध । (क) ॥ आकर्ण्य आकाशे ॥ अज्जा ! किं भणाध ? के एशे, कहिं, वा णीअदि ? एशे किल तवश्शी शामिणो महद्दलश्श शआशादो बहुदलश्श्वसा शेहिअ दाशत्तणं पड़िवणे । ता लक्खणणिमित्त दक्खिण-मशाणअं णीअदि (१) ।

---

चहोरात्र जागरितव्यम्, अहमपि स्वभवनमेव गच्छामि ।

(१) अपसरत आर्य्या ! अपसरत, न भवत्येष बध्यः । तत् किमत्र

---

(ल) मृतचीरहारेण मृतानां शवानां चीराणि यसनखण्डान् हरतीति तथोक्तेन ।

(क) प्रेक्षध्य पश्यथ । तपस्वी वराकः ।

राजा ॥ निश्वस्य आत्मगतम् ॥ कष्टम् अनवधिरयं यथोत्तर-दारुणो मे व्यसनपरम्परापातः (ख) ॥

तथाहि ॥

इदमद्य मम श्वपाक-दास्यं
वसतिर्घोरतरं महाश्मशानम्।
मृत-कम्बल-हारिता च कर्म्म
परिशान्तं व्यसनेष्वहो! न दैवम्? ॥ (ग)

॥ सशोकम् ॥ सुष्ठु खल्विदमुच्यते दुःखं दुःखैस्तिरोधीयते (घ) इति
यतो दक्षिणानृण्यनिवृत्तं मां इदानीं आशोको बाधते।
वैक्लव्यं नाटयित्वा ॥

---

प्रेक्षय। आर्य्याः! किं भणत? क एषः कुत्र वा नीयते? एष किल तपस्वी स्वामिनो महत्तरस्य सकाशात् बहुतर-सुवर्णं गृहीत्वा दासत्वं प्रतिपन्नः, तत् रक्षणनिमित्तं दक्षिण-श्मशानं नीयते।

---

(ख) व्यसनेति। व्यसनानां विपदां परम्परापातः धारापातः।

(ग) इदमिति। अद्य मम इदं श्वपाकदास्यं चाण्डालदासत्वं, घोरतरम् अतिभीषणं महाश्मशानं वसतिः वासभूमिः, कर्म च मृतानां शवानां कम्बलहारिता चीरहारित्वम्, अहो! आश्चर्य्यं दैवं व्यसनेषु ईदृशेष्वपीति शेषः न परिशान्तं न क्लान्तम्?।

(घ) तिरोधीयते आच्छाद्यते एकं दुःखमपरेण दुःखेन अन्तर्धीयते इत्यर्थः दक्षिणाया आनृण्यात् निवृत्तं माम् आ समन्तात् शोको बाधते पीड़यति पूर्वं दक्षिणानृण्यार्थं महत् दुःखमनुभूतम् इदानीं शोकेन तत् तिरोधीयते इति भावः।

किं शोचामि मदेकबान्धवतया सम्प्रत्यनाथाः प्रजाः ?
किं बन्धूनतिवत्सलानशरणानेतांश्च भृत्यानहम् ?
किं दासीं द्विजसद्मनि प्रियतमां वत्सञ्च किं वा शिशुम् ?
किं चाण्डाल-भुजिष्यतामुपगतः पापो निजं जीवितम् ? (ङ)

स्मृतिमभिनीय सखेदम् ॥

दुराराध्ये तस्मिन् परमतपसां धामनि तदा
मुनौ विश्वामित्रे कथमपि यदानृण्यमभवत् ।
तदा क्षिप्तं दृष्ट्वा प्ररुदितमुखं बालतनयं
तदन्तःशल्यं मां व्रणमिव विरूढं ग्लपयति ॥ (च)

चण्डालौ ॥ पुनस्तदेव पठतः ॥

---

(ङ) किमिति । सम्प्रति अहम् अहमेव एकः मुख्यः बान्धवः येषां तत्तया अनाथाः निराश्रयाः प्रजाः किं शोचामि ? अतिवत्सलान् अतिस्निग्धान् अशरणान् अनाथान् बन्धून् एतान् एतान् भृत्यांश्च किं शोचामि ? द्विजसद्मनि दासीं प्रियतमां किं शोचामि ? वत्सं शिशुं वा किं शोचामि ? चाण्डालभुजिष्यतां चाण्डालदासतामुपगतं पापं निजं जीवितं वा किं शोचामि ? । शार्दूलविक्रीडितं वृत्तम् ।

(च) दुराराध्ये इति । तदा दुराराध्ये दुःखेन आराधनीये प्रसादनीये परमतपसां धामनि परमतपोनिधौ तस्मिन् मुनौ विश्वामित्रे कथमपि अतिकष्टेन यदा आनृण्यं प्रतिश्रुतदक्षिणादानात् ऋणमुक्तिः अभवत् तदा क्षिप्तं वटुना रोषात् पादप्रहारेण भूमौ पतितमित्यर्थः अतएव प्ररुदितमुखं साश्रुमुखं बालतनयं शिशुपुत्रं दृष्ट्वा तूष्णीं स्थितमिति शेषः माञ्च अन्तःशल्यं हृदयनिखातं शल्यास्त्रमिव तत् दर्शनमिति भावः । विरूढं विशेषेण वर्द्धितमित्यर्थः व्रणमिव विस्फोटकमिव ग्लपयति ग्लानिं नयति तापयतीत्यर्थः । शिखरिणीवृत्तम् ।

राजा ॥ विचिन्त्य सखेदम् आत्मगतम् । अहह ! दृढं पीड़यति मां सम्प्रति तत्, यत् तदा ।

त्वरयति गुरोर्भक्त्या तस्मिन् द्विजे च रुषारुणे
रुदति च तदा छिन्ने बाले पटान्त-निरोधिनि ।
विष्टतविष्टतै-र्बाष्पोत्पीडै-र्जड़ीकृत-तारका
कथमपि तया क्रूरे दृष्टि-श्चिरान्मयि संहृता ॥ (छ)

सवैक्लव्यम् ॥ हा देवि !

यदि तपनकुलोचिता बधूस्त्वं
यदि विमले शशिनः कुले प्रसूता ।
मयि विनिपातितासि भस्मराशौ
सुतनु ! घृताहुतिवत् तदा कथं त्वम् ? ॥ (ज)

अपि च राजपुत्रि !

उपवन-नवमालिका-प्रसूनैः
स्रजमपि या परिखिद्यसे सृजन्ती ।

---

(छ) त्वरयतीति । गुरोर्भक्त्या हेतुना तस्मिन् रुषारुणे रोषरक्तचक्षुषे इत्यर्थः द्विजे ब्राह्मणशिष्ये त्वरयति, तदा छिन्ने पदाहृते पटान्तनिरोधिनि वसनाञ्चललग्ने बाले शिशौ रुदति च सति तया देव्या शैव्यया कथमपि विष्टतविष्टतैः अतिशयेन स्तम्भितैरित्यर्थः वाष्पोत्पीड़ैः अश्रुभरैः जड़ीकृता मन्थरीकृता आवृतेत्यर्थः तारका यस्याः तादृशी दृष्टिः क्रूरे निष्ठुरे मयि चिरात् संहृता पतिता अथवा मयि पातिता दृष्टिः चिरात् संहृता आकृष्टा शिखरिणीवृत्तम् ।

(ज) यदीति । यदि त्वं तपनकुलोचिता सूर्यवंशसमुचिता वधूः, यदि त्वं विमले विशुद्धे शशिनश्चन्द्रस्य कुले प्रसूता, हे सुतनु ! शुभाङ्गि ! तदा भस्मराशौ घृताहुतिवत् मयि कथं विनिपातितासि ? उपमालङ्कारः । मन्दाकिनीवृत्तं न न र र घटिता तु मन्दाकिनी तल्लक्षणात् ।

परिजन वनितोचितानि कर्म्मा-
ण्यपरिचितानि कथं विधास्यसि त्वम् ? ॥ (ञ)

चण्डालौ ॥ अले ! णातिदूले दक्खिण-मशाणे ता तुलिअं आअच्छ। (२)

राजा ॥ दृष्ट्वा सावष्टम्भम् (ञ)॥ अये ! कथमिदं महाश्मशानम्।

विदूराद्भ्यस्तैर्वियति बहुशो मण्डलशतै-
रुदञ्चत्-पुच्छाग्र-स्तिमित-विततैः पक्षतिपुटैः।
पतन्त्येते गृध्राः शव-पिशित-लोलाननगुहा-
गलल्लालाक्लेद-स्थगित-निजचञ्चूभयपुटाः ॥ (ट)

---

(२) अरे ! नातिदूरे दक्षिणश्मशानं, तत् त्वरितम् आगच्छ।

---

(झ) उपवनेति। या त्वम् उपवनस्य उद्यानस्य नवमालिका-प्रसूनैः नवमालिकापुष्पैः स्रजं मालां सृजन्ती रचयन्ती अपि परिखिद्यसे क्लिश्नासि, सा त्वम् अपरिचितानि अनभ्यस्तानि परिजनवनितानां दासस्त्रीणाम् उचितानि कर्माणि कथं विधास्यसि करिष्यसि ? पुष्पिताग्रावृत्तम्।

(ञ) सावष्टम्भं सधैर्य्यम्।

(ट) विदूरादिति। एते गृध्राः शकुनयः वियति आकाशे विदूरात् अतिदूरात् बहुशः पुनःपुनः अभ्यस्तैः परिचितैः मण्डलशतैः मण्डलाकारभ्रमणशतैरित्यर्थः हेतुभिः उदञ्चत्सु उद्गच्छत्सु पुच्छाग्रेषु स्तिमितं निश्चलं यथा तथा विततैः विस्तारं गतैः पक्षतिपुटैः पक्षमूलयुगलैः उपलक्षणे तृतीया शवानां मृतानां पिशितेभ्यः मांसेभ्यः लोलानि लुब्धानि आननान्येव गुहाः कन्दराणि ताभ्यः गलन्तीनां लालानां क्लेदैः निःसृतरसैः स्थगितं पूरितं निजं स्वकीयं चञ्चूनाम् उभयपुटम् आवरणयुगलं येषां तथाभूताः सन्तः पतन्ति अत्र श्मशाने इति शेषः। शिखरिणीवृत्तम्।

॥ नेपथ्ये कलकलः ॥

॥ राजा ॥ कर्णं दत्त्वा अवलोक्य च । अहो ! बीभत्सरौद्रता (ठ) श्मशानस्य । तथाहि ।

इमा मूर्च्छन्त्यन्तःप्रतिरवभृतः कर्णकटवः
शिवाः क्रूराक्रन्दैरशिव-पटहाडम्बर-रवाः ।
ज्वलन्त्येते ताप-स्फुटित-नृकरोटी पुर-दरी-
लसन्मस्तिष्काक्ता स्तिमितजटिलाग्रा हुतभुजः ॥ (ड)

॥ अग्रतोऽवलोक्य सश्लाघम् ॥ अहो ! बीभत्समपि (ढ) स्पृहणीयमिदं वर्त्तते ! भद्र ! कुणप ! सर्वस्वग्राहिभिः प्रणयिभिश्च श्वापद-गणैर्यथेष्टमुपभुज्यमानो धन्यस्त्वमसि । तथाहि ।

---

(ठ) बीभत्सेति । बीभत्सेन जुगुप्सया रौद्रं भीषणं तस्य भावः तया ।

(ड) इमा इति । अन्तः प्रतिरवभृतः प्रतिध्वनियुतः कर्णकटवः श्रोत्रकर्कशस्वना इत्यर्थः क्रूरैः निष्ठुरैः दारुणैरित्यर्थः आक्रन्दैः रवैः अशिवस्य अमङ्गलसूचकस्य पटहस्य वध्यादिघोषकवाद्यभेदस्य आडम्बरः ताडनविशेषः स इव रवो यासां तथाविधाः इमाः शिवाः शृगालाः मूर्च्छन्ति व्याप्नुवन्ति । एते च हुतभुजः अग्नयः तापेन स्फुटिताः या नृकरोट्यः नरशिरःकपालानि तासां पुराणि अभ्यन्तराण्येव दर्यः कन्दराः ताभ्यः लसद्भिः गलद्भिः मस्तिष्कैः ब्रह्मरन्ध्रस्थितघृताकारवस्तुभिः अक्ताः उद्दीपिताः स्तिमितं निश्चलं जटिलं कुटिलम् अग्रं येषां तथाभूताः सन्तः ज्वलन्ति । शिखरिणीवृत्तम् ।

(ढ) बीभत्सं जुगुप्सितम् । कुणप ! शव ! सर्वं स्वं धनं शरीररूपं गृह्णन्तीति तैः प्रणयिभिः तल्लोलुपैरिति भावः श्वापदगणैः शृगालादिभिः यथेष्टं यथाकामम् उपभुज्यमानः भक्ष्यमाणः ।

भिनत्त्यक्ष्णोर्मुद्रां शिरसि चरणौ न्यस्य करटः
शिवा सृक्कोपान्ते ग्रसति रसनाग्रं विलुठितम्।
छिनत्ति श्वा मेढ्रं प्रथयति च गृध्रोऽत्र विवरं
यथेष्ट-व्यापारास्त्वयि कुणप ! यच्छ्वापदगणाः॥ (ण)

अहो ! निःसारता शरीराणाम्।

तन्मध्यं तदुरस्तदेव वदनं ते लोचने ते भ्रुवौ
जातं सर्वममेध्य-शोणित-वसा मांसास्थि-लालामयम्।
भीरूणां भयदं, त्रपास्पदमिदं विद्याविनीतात्मनां,
तन्मूढैः क्रियते वृथा विषयिभिः क्षुद्रोऽभिमानग्रहः॥ (त)

---

(ण) भिनत्तीति। करटः काकः शिरसि चरणौ न्यस्य दत्त्वा अक्ष्णोः नेत्रयोः मुद्रां सङ्कोचं भिनत्ति अपनयति। शिवा जम्बुकः सृक्कस्य ओष्ठप्रान्तस्य उपान्ते पार्श्वे विलुलितं निर्गतं रसनाग्रं जिह्वाग्रं ग्रसति भक्षयति। श्वा कुक्कुरः मेढ्रम् उपस्थं छिनत्ति उत्कृत्य नयति। गृध्रः शकुनिः अत्र छिन्नमेढ्रदेशे विवरं छिद्रं प्रथयति विस्तारयति च हे कुणप ! यत् यतः श्वापदगणाः त्वयि यथेष्टव्यापारा यथेच्छाचारिणः दृश्यन्ते इति शेषः अतस्त्वं धन्य इति पूर्वेणान्वयः। शिखरिणीवृत्तम्।

(त) तदिति। तत् मध्यं कटिदेशः, तत् उरः वक्षस्थलं, तदेव वदनं मुखं, ते लोचने नयने, ते भ्रुवौ, यत् यत् अतिमनोहरमासीदिति भावः तत् सर्वम् अमेध्याः अपवित्राः शोणितानि, वसाः मेदांसि, मांसानि अस्थिनी लालाश्च तदात्मकं जातम्। इदं-दृश्यमिति शेषः भीरूणां भीतस्वभावानां भयदं भयावहं तथाविद्यया ज्ञानेन विनीतः शिक्षितः आत्मा येषां तादृशानां त्रपास्पदं कथमस्माभिज्ञानतोऽस्मिन् संसारे अभिमानः क्रियते इति लज्जाकरञ्च। तत् तस्मात् मूढैः मुग्धमतिभिः विषयिभिः भोगिभिः वृथा क्षुद्रः अभिमानग्रहः अहङ्काराग्रहः क्रियते। शार्दूलविक्रीड़ितं वृत्तम्।

चण्डालौ ॥ अग्रतोऽवलोक्य ॥ अले ! पणवेम्ह एदं-तुङ्गतलु(थ) कुहल-वाशिणीं भअवदिं चण्डकच्चाइणिं । (३)

अपरः ॥ एवं कलेम्ह ॥ इति तथा कुरुतः ॥

णिम्महिअ-चण्ड-मस्तिए ! महिश-महाशुल-भिस्सगत्तिए ! । कच्चाइणि ! गजचम्मवस्तिए ! लक्खशु मं चण्डशूलहत्थिए ! ॥ (४) (द)

राजा । सर्व्वतोऽवलोक्य सविस्मयम् ॥ अहो ! (ध) वीभत्सोपचारप्रियत्वं कात्यायन्याः । तथाहि ।

जरन्निर्माल्याढ्या मृतमहिष-गो-कण्ठलुलिताः

प्रलम्बन्ते घण्टाः श्रवणकटु-टङ्कारपटवः ।

---

(३) अरे ! प्रणम इमां तुङ्ग-तरु-कुहर-वासिनीं भगवतीं चण्ड-कात्यायनीम् । एवं कुर्मः ।

(४) निर्मथित-चण्ड-मस्तके ! महिषासुरभिन्न-गात्रे ! ।
कात्यायनि ! गजचर्मवासिनि ! रक्ष मां चण्डशूल-हस्ते ! ॥

---

(थ) तुङ्गेति । तुङ्गस्य उन्नतस्य तरोः कुहरे गह्वरे वसतीति तथोक्तां चण्डा कोपना कात्यायनी ताम् ।

(द) निर्मथितेति । निर्मथितं छिन्नं चण्डस्य असुरविशेषस्य मस्तकं यया तत्सम्बुद्धौ । महिषासुरेण भिन्नं खड्गादिभिः विद्धं गात्रं यस्यास्तत्सम्बुद्धौ गजस्य तदाकारासुरविशेषस्य गम्भुहतस्येति भावः चर्म वस्ते आच्छादयतीति तत्सम्बुद्धौ, चण्डं तीक्ष्णं शूलं हस्ते यस्यास्तत्सम्बुद्धौ ।

(ध) वीभत्सेति । वीभत्सा जुगुप्सिताः उपचाराः पूजोपकरणानि प्रिया यस्याः तद्भावः ।

(न) जरदिति जरद्भिः पर्य्युषितैरित्यर्थः निर्माल्यैः उत्सृष्टकुसुम-

तरुस्तम्भे देव्याः क्षतरुधिर-पञ्चाङ्गुलितले
रटन्त्येते यस्मिन् प्रकृति-बलि-लोला बलिभुजः ॥ (न)

॥ सप्रणाममञ्जलिं बद्ध्वा ॥

भगवति ! चण्डि ! प्रेते ! प्रेतविमानप्रिये ! लसत्प्रेते ! ।
प्रेतास्थि-रौद्ररूपे प्रेताशिनि ! भैरवि ! नमस्ते ॥ (प)

॥ नेपथ्ये कलकलः ॥

राजा ॥ आकर्ण्य ॥ अहो ! नानादिगन्त-पातिनां (फ) स्वनीड़-पर्य्युत्सुकानां दिवसावसानशंसिनां संरावणं विहङ्गानाम् ।

---

पत्रादिभिः आद्याः युक्ताः शुष्कपुष्पपत्रमालालङ्कृता इत्यर्थः मृतानां मड्डिषाणां गवाक्षकण्ठेषु लुलिताः पूर्वं शब्दिताः अश्रवणकटुः श्रुतिकठोरः घण्टाकारः टं टम् इत्याकारध्वनिः तत्र पटवः 'श्रुतिकर्कशस्वना इत्यर्थः घण्टाः प्रलम्बन्ते प्रकर्षेण लम्बमानास्तिष्ठन्ति ।' एते प्रकृत्या स्वभावेन बलिषु पूजोपचारद्रव्येषु लोलाः सतृष्णाः बलिभुजः वायसाः अपि रुधिरैः शोणितैः पञ्च अङ्गुलयः (आलपना इति भाषा) यत्र तत् रुधिरपञ्चाङ्गुलि, क्षतं रुधिरपञ्चाङ्गुलि तलं यस्य तादृशे अस्मिन् देव्याः तरुस्तम्भे स्थिता इति शेषः रटन्ति शब्दायन्ते शिखरिणीवृत्तम् ।

(प) प्रेते इति । प्रकृष्टम् इतं गतिः यया तत्सम्बुद्धौ प्रकृष्टगतिदायिनीत्यर्थः । प्रेतानां विमानं व्योमयानं प्रियं यस्याः तत्सम्बुद्धौ प्रेतस्वर्गविधायिनीत्यर्थः । लसन्तः विराजन्तः प्रेताः कुणपा यया तत्सम्बुद्धौ, प्रेतानाम् अस्थिभिः कङ्कालैः रौद्रं भीषणं रूपं यस्याः तत्सम्बुद्धौ । प्रेताशिनि शवभोजिनि ! ।

(फ) नानेति । नानादिगन्तेभ्यः बहुभ्यः दिगन्तेभ्यः पतन्ति आगच्छन्तीति तथोक्तानां स्वनीड़ेषु निजकुलायेषु पर्य्युत्सुकानाम् उत्कण्ठितानां दिवसस्य अवसानं शंसन्ति सूचयन्तीति तादृशानां विहङ्गानां पक्षिणां संरावणं व्यापी कोलाहलः ।

प्रतीचीं दृष्ट्वा ॥ न कस्यचिन्नाम न दुरतिक्रमा दैवपरिपाटिः (व)।

अयमसौ गगनाङ्गण-दीपक-
स्तरल-कालभुजङ्ग शिखामणिः
क्षण-विडम्बित-वाड़व विग्रहः
पतति वारिनिधौ विधुरो रविः (भ)

समन्तादवलोक्य सविस्मयम् ॥

सन्ध्याबध्यास्त्र शोणं तनु दहन चिताङ्गार मन्दार्कबिम्बं
ताराना‌रास्थिकोर्णं विशद-नर-करङ्कायमाणोज्ज्वलेन्दु ।
हृष्यन्नक्तञ्चरौघं घन तिमिर-महाधूम धूम्रानुकारं
जातं लीलाश्मशानं जगदखिलमहो! काल-कापालिकस्य॥(म)

---

(व) नेति। दैवपरिपाटिः दैवगतिः कस्यचित् जनस्य न दुरतिक्रमा न अलङ्घ्या न, अपि तु सर्वस्यैव दुरतिक्रमेति नाम सम्भावनायां सम्भावयामीत्यर्थः ।

(भ) अयमिति। अयम् असौ गगनाङ्गणदीपकः आकाशचत्वरप्रदीपः तरलः प्रभोज्ज्वलः कालभुजङ्गस्य कृष्णसर्पस्य अन्यत्र कालः समय एव भुजङ्गः तस्य शिखामणिः फणरत्नम् अन्यत्र कालप्रवर्त्तक इति भावः । क्षणे प्रतापक्षणे विडम्बितः अनुकृतः वाड़वस्य वाड़वानलस्य विग्रहः शरीरं येन तथाभूतोऽपि साम्प्रतं विधुरः दीनः दैवकृत इति भावः । रविः सूर्य्यः वारिनिधौ समुद्रे पतति अस्तं गच्छतीत्यर्थः । द्रुतविलम्बितं छन्दः द्रुतविलम्बितमाह नभौ भराविति तल्लक्षणात् ।

(म) सन्ध्येति। अहो! आश्चर्य्यम् । अखिलं समस्तं जगत् काल एव कापालिकः तन्त्रोक्ताभिचारिककर्मा धार्मिकविशेषः तस्य लीलाश्मशानं विहारप्रेतभूमिः जातम् । एतदेव प्रतिपादयन् जगद् विशि-

चण्डालौ ॥ दृष्ट्वा ॥ कधं,

अस्तं गच्छदि सूले वज्झट्ठाणं गदे जधा वज्झे ।

एशे तमशंघाडे चण्डालकुलं व्व ओदरइ ॥ (५) (य)

राजा ॥ सर्वतोऽवलोक्य सावष्टम्भम् ॥ अहो ! अतिगम्भीर-भीषणाः सम्प्रति वर्त्तन्ते श्मशानशाखिनः ।

तथाहि ।

आस्कन्धादुत्पतन्तः पृथु-कुहर-गृहद्वारि कूजन्त्युलूका
धुन्वन्तः पक्षपालीः प्रबल-किलकिला मूर्ध्नि गृध्राः पतन्ति ।

---

(५) कथम् ?

अस्तं गच्छति सूर्ये वध्यस्थानं गते यथा वध्ये ।

एष तमः सङ्घातश्चण्डालकुलमिवावतरति ॥

---

नष्ट सन्ध्येत्यादि । सन्ध्या एव वध्या विनाश्या तस्याः क्षणस्थायित्वादिति भावः तस्या अस्त्रेण रुधिरेण रागेण च शोणं रञ्जितम् । तनुः अल्पः दहनः अग्निर्यत्र तादृशश्चितायाः अङ्गार इव मन्दं निष्प्रभं अर्कविम्बं यस्मिन् तथोक्तम् । ताराः नक्षत्राण्येव ताराखीनि शवकङ्कालाः तैः पूर्णम् आकीर्णम् । विशदः निर्मलः यः नरकरङ्कः नरकपालं स इव आचरन् उज्ज्वलः इन्दुश्चन्द्रः यत्र तादृशम् । हृष्यन्तः नक्तञ्चराणां निशाचराणां ओघाः सङ्घाः यस्मिन् तथाविधं तथा घनानि सान्द्राणि तिमिराण्येव महाधूमाः धूमसञ्चयः तैः धूम्रः धूमलः अनुकारः अनुकरणं यस्य तथाविधम् । स्रग्धराछन्दः ।

(य) अस्तमिति । वध्ये अनुमतवधदण्डे वध्यस्थानं गते यथा सूर्ये अस्तं गच्छति एषः तमसां तिमिराणां सङ्घातः समूहः चण्डालकुलमिव वध्यघातकदलमिव अवतरति वध्यस्थानमिति भावः ।

(र) आस्कन्धादिति । उलूकाः पेचकाः आस्कन्धात् आ प्रका-

शाखाग्रालम्बि-शीर्य्यत्-कुणप-घन-वसा-गन्धमाघ्राय रौद्रं
क्रन्दन्तः स्फारयन्ति स्फुरदनलशिखाः फेरवः फेत्कृतानि ॥(ट)

एकः ॥ जनान्तिकम् ॥ अले ! विविध-वेताल-सङ्कुले एशे दक्खिण-मशाणे । ता शिग्घं शिग्घं गच्छम्ह । (६)

अन्यः ॥ एवं कलेम्ह । (७)

उभौ ॥ प्रकाशम् ॥ अले ! महत्तलश्श आसाए एदं मशाणं आहिण्डन्तेण अहो-रत्तं तुए अप्पमत्तेण चिट्ठिदव्वं । (८)

---

(६) अरे ! विविध-वेताल-सङ्कुलमेतद्दक्षिण श्मशानम्, तत् शीघ्रं शीघ्रं गच्छावः।

(७) एवं कुर्वः ।

(८) अरे ! महत्तरस्याज्ञया एतत् श्मशानमाहिण्डमानेन अहोरात्रं त्वया अप्रमत्तेन स्थातव्यम् ।

---

स्कन्धात् स्कन्धपर्य्यन्तमित्यर्थः उत्पतन्तः उद्गच्छन्तः सन्तः पृथु विशालं यत् कुहरं गह्वरं तदेव गृहं तस्य द्वारि कूजन्ति कठोरं नदन्ति । गृध्राः शकुनयः पक्षपालीः पक्षान् धुन्वन्तः कम्पयन्तः तथा प्रबलं किलकिलम् अव्यक्तशब्दविशेषो येषां तथाभूताः सन्तः मूर्ध्नि शिरसि श्मशानशाखिनामिति शेषः पतन्ति । फेरवः जम्बुकाश्च शाखाग्रेषु विटपाग्रेषु आलम्बिनां लम्बमानानां शीर्य्यतां गलदङ्गानां कुणपानां शवानां रौद्रं कटु घनं सान्द्रं वसागन्धं मेदोगन्धम् आघ्राय क्रन्दन्तः क्रोशन्तः अतएव स्फुरन्ती मुखविवरात् निःसरन्ती अनलशिखा येषां तथाभूताः सन्तः फेत्कृतानि स्वजातिरवविशेषान् स्फारयन्ति विस्तारयन्ति । स्रग्धरावृत्तम् ।

राजा ॥ सकृपम् ॥ एवं, यदादिशति स्वामी ।

नेपथ्ये ॥ कलकलः ॥

चण्डालौ ॥ सभयम् ॥ हा मादिए ! (ल) समुत्थिदे निशा-कलअले ता शिग्घं पलाअम्ह ॥ (८) इति निष्क्रान्तौ ॥

राजा ॥ सावष्टम्भं परिक्रम्य दृष्ट्वा ॥ अहो ! बीभत्सदर्शनाः कौणपनिकायाः । (व)

तथाहि ।

जरत्कूपाकारै-र्नयनपरिवेषै-स्तनुशिरा-
करालोच्चै-र्घोणाः कुटिलरदनाः क्रूरवदनाः ।
अमी नाड़ी-जङ्घा-द्रुम-कुहर-निम्नोदर-भुवो
घन-स्नायु-च्छन्न-स्फुटपटलं बिभ्रति वपुः ॥ (श)

- (८) हा मातृके ! समुत्थितो निशा-कलकलः । तत् शीघ्रं पलायावहे ।

(ल) मादिए मातः ।

(व) कौणपनिकायाः शवनिवासाः ।

(श) जरदिति । जरतां पुरातनानां कूपानाम् आकार इव आकारो येषां तथाभूतैः नयनपरिवेषैः नेत्रपरिधिभिः नेत्रकुहरैरित्यर्थः । उपलक्षिताः तनुभिः क्षीणाभिः शिराभिः करालाः भीषणाः उच्चैः उन्नताः घोणा नासा येषां तथोक्ताः कुटिलाः रदना दन्ता येषां तादृशाः क्रूरं विकटं वदनं येषां तथाभूताः नाड़ीजङ्घाः शिरामयजङ्घायन्त इत्यर्थः द्रुमकुहरवत् वृक्षकोटरवत् निम्ना उदरभुवः जठरस्थानानि येषां तथाविधाः अमी कुणपाः घनैः स्नायुभिः शिराभिः छन्नं स्फुटपटलं सन्धिस्थानचयः यस्य तथाभूतं वपुः शरीरं बिभ्रति वहन्ति शिखरिणीवृत्तम् ।

॥ सकौतुकमवलोक्य॥ अहो! क्रीड़ा-कलह-कौशलं पिशाचानाम्।

तथाहि।

पिबत्येकोऽन्यस्मात् घनरुधिरमाच्छिद्य चषकं
ज्वलज्जिह्वो वक्त्राद्गलितमपरो लेढ़ि पिबतः।
ततस्त्यानान् कश्चिद् भुवि निपतितान् शोणितकणान्
क्षणादुच्चै-र्ग्रीवो रसयति लसद्दीर्घरसनः॥ (ष)

॥ सकौतुकमवलोक्य सस्मितम्॥ अहो नु खलु भोः! परिहास इव दुर्विदग्धानां (स) केलिरपि रसान्तरम् आलम्बते यातुधानानाम्।

तथाहि।

क्व रम्यः सम्भोगो मृदु-मधुर-चेष्टाङ्ग-सुभगः
कटाक्षाः क्वान्योन्य प्रलयविततोल्काद्युतिभृतः।

---

(ष) पिबतीति। एकः पिशाचः अन्यस्मात् पिशाचात् घन रुधिरं यत्र तादृशं चषकं पानपात्रं पिबति। अपरः पिशाचः ज्वलन्ती जिह्वा यस्य तथाविधः पिबतः अपरस्य पिशाचस्य वक्त्रात् मुखात् गलितं भ्रष्टं रुधिरमिति शेषः लेढ़ि। लसन्ती स्फुरन्ती दीर्घा रसना जिह्वा यस्य तथाविधः कश्चित् पिशाचः क्षणात् क्षणकालेन उच्चैः उन्नमिता ग्रीवा येन तथोक्तः सन् ततः तस्मात् अपरस्य मुखात् दित्यर्थः भुवि निपतितान् स्त्यानान् घनान् शोणितकणान् रसयति आस्वादयति। शिखरिणीवृत्तम्।

(स) दुर्विदग्धानां मूढानां रसान्तरं भिन्नरसं केलिदर्शने हि लोकानां केलौ प्रवृत्तिर्जायते, एतेषान्तु तद्दर्शने तद्विराग एवेति भावः। यातुधानानां राक्षसानाम्।

(ह) क्वेति। मृद्वी कोमला मधुरा मनोहारिणी चेष्टा व्यापार

क्व दंष्ट्रासङ्घट्ट-ज्वलित-दहन-चुम्बितविधि-
र्घनाश्लेषः क्वायं प्रतिरसदुरःपञ्जररवः॥ (ङ)

॥ सहर्षमवलोक्य ॥ धिगतिबीभत्समेतत्।
चिताग्नेराकृष्टं नलक-शिखर-प्रोतमसकृत्
स्फुरद्भिर्निर्वार्य्य-प्रलयपवनैः फुत्कृतशतैः।
शिरो नारं प्रेतः कवलयति तृष्णावश-लसत्-
करालास्यः शुष्यद्वदनकुहरस्तूद्गिरति च॥ (च)

---

येषां तादृशैः अङ्गैः करनेत्रादिभिः सुभगः शोभनः अतएव रम्यः मनोज्ञः सम्भोगः स्त्रीसङ्ग इति यावत् क्व कुत्र? अन्योन्यं परस्परं प्रलये कल्पान्ते वितता निस्तारं गताः या उल्काः अन्तरीक्षात् पतन्तः अग्न्युत्पातविशेषाः तासां द्युतिं दीप्तिं बिभर्तीति तथोक्ताः कटाक्षाः नयनोपान्तविलोकनानि क्व? दंष्ट्राणां सङ्घट्टेन ज्वलितः दहनः अग्निः यत्र तादृशः चुम्बनविधिः चुम्बनव्यापारः क्व? सायञ्च प्रतिरसन् प्रतिध्वनन् उरसां वक्षसां पञ्जराणां पार्श्वास्थ्नां रवः स्वनः यत्र तादृशः घनाश्लेशः गाढालिङ्गनं क्व?। सर्वे एव व्यापारा एषां विकृतिमाज इति भावः। शिखरिणीवृत्तम्।

(च) चिताग्नेरिति। तृष्णावशेन लोभातिशयेन हेतुना लसत् विस्तारं गच्छत् करालं भीषणम् आस्यं मुखं यस्य तथोक्तः प्रेतः शवाविष्टो भूतविशेष इत्यर्थः चिताग्नेः ज्वलन्त्याश्चितायाः इत्यर्थः आकृष्टं नलकस्य नासाभूषणविशेषस्य शिखरे अग्रे प्रोतं विद्धं नारं शिरः शवमुण्डं स्फुरद्भिः प्रसरद्भिः निर्वार्य्या वारयितुमशक्याः ये प्रलयपवनाः कल्पान्तवायवः तैः तत्सदृशैरिति भावः। फुत्कृतशतैः बहुभिः फुत्कारवातैरित्यर्थः उपलक्षणे तृतीया औष्ण्यनिवारणार्थं बहुशः फुत्कुर्वद्भिरित्यर्थः कवलयति भक्षति, तथा शुष्यत् दह्यमानं वदनकुहरं मुखविवरं यस्य तथाभूतः सन् उद्गिरति च। शिखरिणीवृत्तम्।

॥ स्मृतिमभिनीय ॥ अलममीषां दर्शनकुतूहलितया। तद्यावत् स्वाम्यादेशमनुतिष्ठन् परितः श्मशानमेव पर्य्यटामि। परिक्रम्य दृष्टिमभिनीय ॥ अहो! गम्भीरता निशीथिन्याः। (क)

तथाहि।

मुष्टिग्राह्यं तिमिरमभितो निह्नुते दिग्विभागं
पादन्यासः स्खलति विषमे निष्फला दृष्टिपाताः।
धाराभिन्नाञ्जनगिरिसुहृल्लुप्तवर्णान्तरत्वात्
लब्धाद्वैतः स्फुरति परितो नीलिमैकतानः॥ (ख)

भवतु, उच्चैस्तावद् व्याहरामि। कः कोऽत्र भोः! श्रूयतां मम श्मशानाधिपतेः स्वामिनो व्याहारः।

अज्ञात्वा मत्परिज्ञानम्, अदत्त्वा मृतकम्बलम्।
प्रवर्त्तनीयाः केनापि न श्मशानोचिताः क्रियाः॥ (ग)

---

(क) निशीथिन्याः रजन्याः। गम्भीरता दुरवगाहता।

(ख) मुष्टीति। मुष्टिभिः ग्राह्यं ग्रहणीयं सान्द्रत्वादिति भावः। तिमिरं तमः अभितः समन्तात् दिशां विभागं निह्नुते अपहरति, पादन्यासः पादविक्षेपः विषमे उन्नतानते भूभागे स्खलति विपर्य्यस्यति। दृष्टिपाताः नेत्रव्यापाराः निष्फलाः किमपि न द्रष्टुं शक्यते इति भावः। धाराभिः वर्षासु प्रवाहैः भिन्नः विगलितः यः अञ्जनगिरिः कज्जलशैलः तस्य सुहृत् सदृश इत्यर्थः नीलिमा नीलत्वम् एव लुप्तवर्णान्तरत्वात् विलुप्तान्यवर्णत्वात् लब्धम् अद्वैतम् अद्वितीयत्वं येन तथोक्तः, अद्वितीय इत्यर्थः तथा एकः मुख्यः तानः विस्तारः यस्य तादृशः सन् परितः समन्तात् स्फुरति राजते विलसतीत्यर्थः। मन्दाक्रान्तावृत्तम्। व्याहारः उक्तिः आदेश इत्यर्थः।

(ग) अज्ञात्वेति। मत्परिज्ञानम् अज्ञात्वा मामविज्ञाप्येत्यर्थः मृत-

तदद्यप्रभृति,

एतत् तथेति करणीयमिहाप्रमत्तै-

राज्ञा-व्यतिक्रमसहः किल नास्मि भर्त्तुः ।

ब्रह्मेन्द्र-वायु-वरुणप्रतिमोऽपि यः स्यात्

तस्याप्ययं प्रतिभटोऽस्तु भुजो मदीयः ॥ (घ)

कथं न कश्चिद् व्याहरति । भवतु अन्यतो व्याहरामि । परिक्रम्य ॥ कः कोऽत्र भोः ! ।

॥ नेपथ्ये ॥ अयमहं भोः !

राजा ॥ सावष्टम्भम् ॥ कथं प्रतिव्याहारः (ङ) । भवतु शब्दानुसारेणोपगम्य निपुणमवधारयामि कोऽयमिति । परिक्रम्य नेपथ्याभिमुखमवलोक्य च सविस्मयम् ॥ अये ! कोऽयम् ?

खट्वाङ्गधृग् भस्मकृताङ्गरागो

नरास्थिभूषोज्ज्वल-रम्य-कान्तिः ।

---

कम्बलं स्तरश्च कम्बलं गात्राच्छादनादीनामुपलक्षणमेतत् अदत्त्वा मह्यमिति शेषः केनापि जनेन श्मशानोचिताः क्रियाः शवदाहादिका इत्यर्थः न प्रवर्त्तनीयाः न सम्पादनीया इत्यर्थः ।

(घ) एतदिति । इह श्मशाने एतत् मदुक्तं तथा इति अप्रमत्तैः अवहितैः सर्वैः करणीयं सम्पाद्यम् । अस्मि अहं भर्त्तुः स्वामिनः राज्ञः चण्डालराजस्य व्यतिक्रमं सहते इति तथोक्तः न किल नैव, प्रभोर्व्यतिक्रमं केनचिदपि क्रियमाणं नाहं सहे इत्यर्थः । यश्च ब्रह्मणः इन्द्रस्य वायोः वरुणस्य च प्रतिमः सदृशः स्यात् मदीयः अयं भुजः तस्यापि प्रतिभटः प्रतियोद्धा अस्तु भवतु तादृशेनापि महात्मना अहं योत्स्ये इति भावः । वसन्ततिलकं वृत्तम् ।

(ङ) प्रतिव्याहारः प्रत्युक्तिः ।

कपालपाणि-र्नृकरङ्क-मौलि-
राभाति साक्षादिव भूतनाथः॥ (च)

॥ ततः प्रविशति कापालिकवेषो धर्म्मः॥

धर्मः॥ अयमहं भोः!

अयाचितोपस्थितभैक्ष्य वृत्ति-
र्निवृत्त-पञ्चेन्द्रिय-निस्तरङ्गः।
व्यतीत्य संसार-महाश्मशानं
चरामि बीभत्समिदं श्मशानम्॥ (छ)

विचिन्त्य॥ स्थाने (ज) स खलु रुद्रो भगवान् महाव्रतं चचार। परः किलायं प्रकर्षः कामचारिणाम्। किन्तु

---

(च) खट्वाङ्गधृगिति। खट्वाङ्गधृक् खट्वाङ्गधरः भस्मना कृतः अङ्गरागो अङ्गविलेपनं येन तथोक्तः। नराणाम् अस्थीन्येव भूषा अलङ्काराः ताभिः उज्ज्वला रम्या च कान्तिर्यस्य तथोक्तः। कपालः शवशिरः पाणौ यस्य तथाविधः, नृकरङ्क नरास्थि मौलिः शिरोभूषणं यस्य तथाविधः अतएव साक्षात् स्वयं भूतनाथ इव हर इव आभाति राजते। उपजातिवृत्तम् उत्प्रेक्षालङ्कारः।

(छ) अयाचितेति। अयाचितम् अप्रार्थितं यथा तथा उपस्थितम् तया भैक्ष्यं भिक्षालब्धं वस्तु वृत्तिः जीवनोपायो यस्य तथोक्तः अयाचितेन उपस्थितेन तदभावे भैक्ष्येण जीवन्नित्यर्थः निवृत्तानि संयतानीत्यर्थः पञ्च इन्द्रियाणि चक्षुरादीनि यस्य तथाभूतः अतएव निस्तरङ्गः अनुद्धत इति यावत् सन् संसार एव महत् श्मशानं व्यतीत्य विहाय इदं बीभत्सं जुगुप्सितं श्मशानं चरामि भ्रमामि। उपेन्द्रवज्रावृत्तम्।

(ज) स्थाने युक्तम्। महाव्रतं पूर्वोक्त भैक्ष्यवृत्तिपञ्चेन्द्रिय संयमा-

भैक्ष्याद्वैतं तपोऽद्वैतं क्रियाद्वैतञ्च तत्परम्।
सुलभं सर्वमेवैतद् आत्माद्वैतं तु दुर्लभम्॥ (झ)

॥ समन्तादवलोक्य साशङ्कम् आत्मगतम्॥

मया ध्रियन्ते भुवनान्यमूनि
सत्यञ्च मां तत्सहितं बिभर्त्ति।
परीक्षितुं सत्यमतोऽस्य राज्ञः
कृतो मया वेषपरिग्रहोऽयम्॥ (ञ)

॥ विचिन्त्य साश्चर्यमात्मगतम्॥ आश्चर्यं दुःखपरम्परा-(ट) स्वशोच्यमानस्य राजर्षेर्हरिश्चन्द्रस्य चरितम्। अथवा प्रकृतिरियं महात्मनाम्। कुतः,

---

द्विरूपमिति भावः। प्रकर्षः उत्कर्षः कामचारिणां स्वेच्छाचारिणाम् उदासीनानामिति भावः। तेषां संसारबन्धनाभावेन कामचारित्वमिति भावः।

(झ) भैक्ष्याद्वैतमिति। भैक्ष्याद्वैतम् अद्वितीयभैक्ष्यवृत्तिः एकवारभिक्षाचरणेन जीवनमित्यर्थः। तपोऽद्वैतः अद्वैतभावेन द्वैधशून्यमनसा इत्यर्थः तपः चान्द्रायणादिव्रतधारणम्। क्रियाद्वैतम् अद्वैतभावेन क्रियानुष्ठानम्। तत्परम् एकतानमनसा कृतमित्यर्थः एतत् सर्वमेव सुलभं सुसाध्यं अनायासेन सम्पद्यते इति भावः तु किन्तु आत्माद्वैतम् अद्वितीयस्यात्मनः दर्शनमित्यर्थः दुर्लभं ब्रह्मज्ञानमेव सर्वथा दुर्लभमिति भावः।

(ञ) मयेति। मया अमूनि भुवनानि जगन्ति ध्रियन्ते पाल्यन्ते। सत्यञ्च तत्सहितं सर्वगुणसमन्वितं मां बिभर्त्ति धारयति। अतः कारणात् अस्य राज्ञः सत्यं परीक्षितुं मया अयं वेषपरिग्रहः कापालिकवेषग्रहणमित्यर्थः कृतः। उपजातिवृत्तम्।

(ट) दुःखपरम्परासु धाराक्रमेण उपगतेषु दुःखसङ्घेषु।

सुखं वा दुःखं वा किमिव हि जगत्यस्ति नियतं
विवेक-प्रध्वंसाद् भवति सुखदुःखव्यतिकरः।
मनोवृत्तिः पुंसां जगति जयनी कापि महतां
यया दुःखं दुःखं सुखमपि सुखं वा न भवति ॥ (ठ)

भवतु तत्सकाशमेव गच्छामि ॥ परिक्रम्य दृष्ट्वा सश्लाघम् ॥ अये ! अयमसौ महात्मा तदुपसर्पामि ॥ तथा कृत्वा ॥ भो राजन् ! सिद्धिभाजनं (ड) भूयाः।

राजा ॥ स्वागतं महाव्रतचारिणो (ढ) नैष्ठिकस्य।

कापालिकः ॥ भो राजन् ! अर्थिनो (ण) वयं भवन्तमुपागताः।

राजा ॥ लज्जां नाटयति ॥

---

(ठ) सुखमिति। जगति सुखं वा दुःखं वा किमिह वस्तु नियतम् अस्ति ? नैव इत्यर्थः। विवेकस्य ज्ञानस्य प्रध्वंसात् अभावात् सुखदुःखयोः व्यतिकरः, अवरोधः भवति अविवेकिनः जगति सुखं दुःखञ्च विभज्य कदाचित् हृष्यन्ति कदाचिद्वा व्यथन्ते इति भावः। महतां पुंसां जगति जयिनी उत्कर्षशालिनी कापि अनिर्वचनीया मनोवृत्तिः अस्तीति शेषः यया मनोवृत्त्या दुःखं सामान्यजनक्लेशसाधनं वस्तु दुःखं सुखं सामान्यजनहर्षसाधनं वस्तु सुखं वा न भवति। महात्मानः दुःखे न क्षुभ्यन्ति सुखे न वा न हृष्यन्तीति भावः शिखरिणीवृत्तम्।

(ड) सिद्धिभाजनं सफलमनोरथ इत्यर्थः।

(ढ) महाव्रतचारिणः कठोरव्रतिनः नैष्ठिकस्य यावज्जीवब्रह्मचारिण इत्यर्थः।

(ण) अर्थिनः याचकाः।

कापालिकः ॥ अलं व्रीड़या; योगचक्षुषो (त) हि वयं, विदितवृत्तान्ता एव भवतः। तथाप्येवमवस्थस्यापि ते न नः समीहितदाने दारिद्र्यम्।

तथाहि पश्य।

परेषामुपकाराय न कथञ्चिन्न साधवः।
कुहूमपि समासाद्य धिनोतीन्दुर्वनस्पतीन्॥ (थ)

तदवधत्तां (द) पुनः।

राजा ॥ अवहितोऽस्मि।

कापा ॥ वेताल वज्र-गुटिकाञ्जन-पादलेप-
दैत्याङ्गनाविधि रसायन-धातुवादाः।
तच्चिन्त्यतां करतलोपगता ममैते
विघ्नैः पटैरिव यथा न तिरस्क्रियन्ते॥ (ध)

---

(त) योगचक्षुषः योगः समाधिरेव चक्षुः येषां तथाविधाः समाधिप्रभावात् सर्वं पश्याम इति भावः। नः अस्माकं समीहितदाने अभीष्टप्रदाने, दारिद्र्यं दैन्यम्।

(थ) परेषामिति। साधवः कथञ्चित् केनापि प्रकारेण परेषाम् उपकाराय न न, अपि तु कथञ्चिदपि उपकुर्वन्तीत्यर्थः। इन्दुः चन्द्रः कुहूम् अमावस्यामपि समासाद्य प्राप्य वनस्पतीन् वृक्षान् धिनोति रसदानेन प्रीणयति।

(द) अवधत्ताम् अवधानेन शृणोतु इत्यर्थः।

(ध) वेतालेति। एते वेतालादयः मम करतलगताः हस्तगताः सिद्धिं प्राप्ता इत्यर्थः पटैरिव वस्त्रैरिव विघ्नैः यथा न तिरस्क्रियन्ते अन्तर्धीयन्ते तत् तथा चिन्त्यतां सम्पाद्यतामित्यर्थः। वेतालः शवाविष्टः भूतः, स खलु सिद्धश्चेत् साधकस्य आज्ञया दुष्करमपि

तदादिश्यतां विघ्नप्रत्यूह इति।

राजा॥ भोः साधक! योगबलाज्ज्ञानात्येव भवान्, अस्वाधीनमिदं शरीरकं, तत् स्वाम्यर्थाविरोधतः (न)प्रयतिष्ये।

कापा॥ भो राजन्! कुतोऽत्र स्वाम्यर्थविरोधः। नन्वाज्ञामात्रसम्पाद्यं नः समीहितं भवतः। तदितो नातिदूरे सिद्धरसानां (प) महानिधानमस्ति तदर्थमस्माभिरारम्भणीयमस्ति। भवता पुनरिहस्थेनैव विघ्नप्रत्यूहं प्रति सावधानेन भवितव्यम्॥ इति निष्क्रान्तः॥

राजा॥ सावष्टम्भं सर्वतः परिक्रम्य॥ प्रोत्सरत(फ)प्रोत्सरत विघ्नाः! सर्वथा प्रतिहतो वः प्रसर इति।

---

कार्यं साधयति। वज्रं कुलिशं तच्च सिद्धं चेत् साधकस्यानुमते स्थाने पतति। गुटिका च सिद्धा साधकस्य मुखनिक्षिप्ता तदिच्छया तं मयूरं काकं वा यं कञ्चन प्राणिनं करोति। अञ्जनञ्च सिद्धञ्चेत् साधकस्य नयननिक्षिप्तं तस्मै पृथिवीस्थं सर्वं गुप्तधनं त्रिकालघटनाञ्च प्रत्यक्षवद् दर्शयति। पादलेपः सिद्धश्चेत् साधकः तत्प्रयुक्तपादः जले स्थले इव गन्तुं शक्नोति। दैत्याङ्गनाविधिसिद्धो साधकः दैत्याङ्गनाभिः सह यथाभिलषितं भोगान् भोक्तुं पारयति। रसायनसिद्धः साधकः द्रव्यान्तरयोगेन द्रव्यान्तरमुत्पादयति। धातुवादसिद्धश्च साधकः सुलभेन द्रव्येण रूदादिना दुर्लभं द्रव्यं स्वर्णादिकं सृजति। इति निष्कर्षः। वसन्ततिलकं वृत्तम्। विघ्नप्रत्यूहः विघ्नान्तरायः।

(न) स्वाम्यर्थाविरोधतः यथा स्वामिनः क्षतिर्न स्यात् तथा इति भावः।

(प) सिद्धरसानां सिद्धानां रसानां वस्तुविशेषाणां महानिधानं महान् निधिः। आरम्भणीयम् उद्योक्तव्यम्।

(फ) प्रोत्सरत अपगच्छत। प्रतिहतः विहितः निषिद्ध इति यावत् भवतेति शेषः। प्रसरः स्थितिः।

॥ नेपथ्ये ॥ राजन् ! यथाज्ञापयसि।

श्रेयांसि विवृतद्वाराण्यथ विद्याः स्वयंवराः।
सिद्धयः कामचारिण्यस्त्वदाज्ञां कोऽतिवर्त्तते ॥ (ब)

॥ राजा ॥ सहर्षम् ॥ दिष्ट्या तथेति प्रतिपन्नमस्मद्वचनं विघ्नैः।

प्रियं नः प्रियम्।

॥ ततः प्रविशन्ति विमानचारिण्यो विद्याः ॥

॥ उपसृत्य ॥ राजन् ! हरिश्चन्द्र ! दिष्ट्या वर्द्धसे।

त्वय्यचेष्टत राजन्ये क्रुद्धो यद् दारुणो मुनिः।
विद्यास्त्वद्विपदां मूलं ता वयं समुपस्थिताः ॥ (भ)

राजा ॥ ॥ दृष्ट्वा साश्चर्यमात्मगतम् ॥ कथमिमास्ता भगवत्यो विद्याः ? यास्तु भगवतो विश्वामित्रस्यापि तीव्रैस्तपोभिरवसन्नम् ॥ प्रकाशम् अञ्जलिं बद्ध्वा ॥ नमस्त्रिलोक-विजयिनीभ्यो विद्याभ्यः।

---

(ब) श्रेयांसीति। अद्य श्रेयांसि मङ्गलानि विवृतम् उद्घाटितं द्वारं येषां तादृशानि, विद्याः पूर्वरचिता इति भावः स्वयंवराः स्वयंवरगामिन्यः तथा सिद्धयः कामचारिण्यः यथेष्टसम्पादिन्यः सर्वत्र तत्रैव योज्यम्। अतः कः त्वदाज्ञां तव आदेशम् अतिवर्त्तते अतिक्रमति ? अद्य सर्व एव तव वशे वर्त्तते, कोऽपि तवादेशं नातिक्रामतीत्यर्थः।

(भ) त्वयीति। मुनिः विश्वामित्रः क्रुद्धः सन् अस्माकमपगमादिति भावः राजन्ये त्वयि यत् यदर्थमित्यर्थः दारुणः निष्ठुरः अचेष्टत व्यवहारात् तव विपदां मूलं ता विद्या वयं समुपस्थिताः।

विद्याः ॥ राजन्! त्वदायत्ता (य) वयम्, अतस्त्वं शाधि नः।

राजा ॥ यदि मामनुग्राह्यं भवत्योऽनुमन्यन्ते, ततो भगवन्तं कौशिकमुपतिष्ठध्वं ततोऽनपराद्धं मुनेरात्मानं समर्पयामि।

विद्याः ॥ सविस्मयं परस्परमवलोक्य ॥ राजन्! एवमस्तु ॥

॥ इति निष्क्रान्ताः ॥

ततःप्रविशति स्कन्धारोपित-निधानेन वेतालेनानुगम्यमानः कापालिकः ॥

कापालिकः ॥ सहसोपसृत्य ॥ राजन्! दिष्ट्या वर्द्धसे, संसिद्ध-रसस्यास्य (र)महानिधानस्य लाभाभ्युदयेन, तदुपयुज्यतां भगवान् रसेन्द्रः।

यस्योपयोगादवधूय मृत्यु-
मासाद्य सद्योऽमरलोकमार्गम्।

---

(म) असन्नं व्यर्थीभूतं तीव्रतपोभिरपि या वशीकर्त्तुं न शक्यन्ते इति भावः।

(य) त्वदायत्ता तवाधीनाः, शाधि आज्ञापय। ततस्तदा अनपराद्धम् अपराधरहितम् आत्मानं मुनेः समर्पयामि मुनिसमीपे अनपराधी भवामीत्यर्थः।

(र) संसिद्धेति। संसिद्धः सम्यक् सिद्धिं गतः अधीनीभूत इत्यर्थः रसः भोगाधिकारः यस्य तादृशस्य महानिधानस्य महतः रत्नराशेरित्यर्थः। उपयुज्यतां भुज्यतां रसेन्द्रः उत्कृष्टः रसः भोग्यवस्तु इत्यर्थः भगवान् सर्वशक्तिमान्। अनेन रसेन्द्रेण सर्वसिद्धिर्जायते इति भावः।

(ल) यस्येति। यस्य रसेन्द्रस्य उपयोगात् अभ्यवहारात् सिद्धाः लब्धसिद्धयः पुंसः सद्यः सपदि मृत्युम् अवधूय निरस्य अमरत्वमापद्य इत्यर्थः अमरलोकमार्गं स्वर्गमार्गम् आकाशमित्यर्थः आसाद्य प्राप्य

विरूढकल्पद्रुममञ्जरीणि
शिरांसि मेरोर्विहरन्ति सिद्धाः ॥ (ल)

राजा ॥ ननु दासभाव-विरुद्धमेतत्, एवं किल वञ्चितः स्वामी स्यात् ।

काषा ॥ साश्चर्य्यमात्मगतम् ॥ अहो आश्चर्य्यम्! भवत्वेवं तावत् ॥ प्रकाशम् ॥ यद्येवं गृह्यतां सकलत्रस्यात्मनो निष्क्रयायैतन्महानिधानम् (व) ।

राजा ॥ कथमेवं भविष्यति, यतोऽधनं (श) दासभावं मन्यन्ते। स्वाम्यर्थं तस्तु (ष) नेदं प्रत्याख्यानमर्हति इत्यनुमत एवायं भवतः सङ्कल्पः, तत्राप्यतां स्वामिनो निभृतमिदं महानिधानम् ।

काषा ॥ साश्चर्य्यमात्मगतम् ॥ अहो ! धैर्य्यम् । अहो ! ज्ञानम् । अहो ! महानुभावता च । अथवा,

---

उत्पतनशक्तिं लब्ध्वेत्यर्थः विरूढाः सञ्जाताः कल्पद्रुमाणां मञ्जर्य्यः येषु तानि मेरोः सुमेरुपर्वतस्य शिरांसि शृङ्गाणि विहरन्ति तेषु क्रीड़न्तीत्यर्थः । उपजातिवृत्तम् ।

(व) निष्क्रयाय दासत्वमोचनाय ।

(श) अधनमिति । मन्यन्ते शास्त्रकारा इति शेषः भार्य्या पुत्रश्च दासश्च त्रय एवाधनाः स्मृताः । यत्ते समधिगच्छन्ति यस्य ते तस्य तद्धनमिति शास्त्रादिति भावः ।

(ष) स्वाम्यर्थत इति । स्वामिनः अर्थतः निमित्तात् । इदं धनं प्रत्याख्यानं परित्यागं नार्हति, न परित्यक्तुमुचितमिति भावः । अनुमतः स्वीकृतः । सङ्कल्पः अभिलाषः निधिदानविषय इति भावः । अर्प्यतां लभ्यतां मयेति शेषः स्वामिनः कृते इति शेषः । स्वाम्यर्थम् अहमेतत् गृह्णामीति भावः ।

चलन्ति गिरयः कामं युगान्त-पवनाहताः।
कृच्छ्रेऽपि न चलत्येव धीराणां निश्चलं मनः॥ (स)

तन्महसाधि किमतिनिर्बन्धेन (ह)॥ प्रकाशं वेतालं प्रति॥ भद्र! गम्यताम्, क्रियतामस्य राज्ञः समीहितम्।

वेतालः॥ ॥ सप्रणामम्॥ जं साधओ अणवेदि (१०) इति निष्क्रान्तः॥

कापा॥ समन्तादवलोक्य॥ भो राजन्! प्रभातप्राया वर्त्तते विभावरी। तत् साधयिष्यामस्तावत्।

राजा॥ भोः साधक! स्मर्त्तव्या वयं दुःस्थितकथासु (च)

कापा॥ राजन्! देवतास्त्वां स्मरिष्यन्ति॥ इति निष्क्रान्तः

राजा॥ प्राचीमवलोक्य सप्रसादम्॥ अये! कथम्?

तमो विभिद्य गहनं सन्ध्यारुण-पुरःसरः।
अनुग्रहाय लोकानाम् उदेत्ययमहर्पतिः॥ (क)

---

(१०) यद् साधकः आज्ञापयति।

---

(स) चलन्तीति। गिरयः पर्वताः युगान्तपवनेन प्रलयसमीरणेन आहताः ताड़िताः सन्तः कामम् अवश्यं चलन्ति। धीराणां महतां निश्चलं चेतः कृच्छ्रेऽपि व्यसनेऽपि नैव चलति।

(ह) अतिनिर्बन्धेन अत्याग्रहेण। समीहितम् अभीष्टं स्वामिनः निधिप्राप्तिरूपमिति भावः।

(च) दुःस्थितकथासु दीनजनप्रस्तावेषु।

(क) तम इति। अयम् अहर्पतिः सूर्य्यः गहनं सान्द्रं तमः तिमिरं विभिद्य निरस्य सन्ध्या प्रातःसन्ध्या अरुणः स्वसारथिश्च पुरः-

तद् यावदहमपि भगवती-भागीरथी-तीरमुपगम्य स्वास्यादेशमनुतिष्ठामि ॥ इति निष्क्रान्तः ॥

इति श्रीआर्य्यक्षेमीश्वर-कृते चण्डकौशिकनाटके श्मशानचरितं नाम चतुर्थोऽङ्कः ।

---

## अथ पञ्चमोऽङ्कः ।

॥ ततः प्रविशति विकृतमलिनवेषो राजा ॥

राजा ॥ सनिर्वेदं निश्वस्य ॥ कष्टं भोः ! कष्टम् !

यद्वैरं मुनिसत्तमस्य सुहृदां त्यागस्तथा विक्रयो-
दाराणां तनयस्य चेदमपरं चाण्डाल-दास्यञ्च यत् ।
दुर्वाराणि मया कठोरहृदयेनाप्तानि मूढ़ात्मना
यस्यैतानि फलानि दुष्कृतमहो ! किन्नाम तद्दारुणम् ! ॥(क)

---

वैरः अग्रेसरो यस्य तथाभूतः सन् लोकानां जगतामनुपघाय उदेति उद्गच्छति ।

इति चतुर्थाङ्कव्याख्या समाप्ता ।

(क) यदिति । मुनिसत्तमस्य विश्वामित्रस्य यत् वैरं विद्वेषः सयीति शेषः, तथा सुहृदां वान्धवानां त्यागः, दाराणां पत्न्याः तनयस्य पुत्रस्य च विक्रयः, इदञ्च अपरं यत् चाण्डालदास्यम् एतानि दुर्वाराणि वारयितुमशक्यानि मूढ़ात्मना मन्दमतिना कठोरहृदयेन निष्ठुरमनसा मया आप्तानि प्राप्तानि, यस्य दुष्कृतस्य एतानि फलानि, अहो ! आश्चर्यं तत् किं नाम दारुणं दुष्कृतम् । शार्दूलविक्रीड़ितं वृत्तम् ।

॥ सवैक्लव्यम् ॥ अहो ! बलवती भवितव्यता । कुतः,

मामानम्रशिरोधरं प्रभवता क्रुद्धेन राज्यश्रिया
यद्विश्लेषयतापि तेन मुनिना निःशेषितं नस्त्वयम् ।
तत्रापि व्यसनप्रियेण विधिना वृत्तं तथा निष्ठुरं
येनात्मा तनयः कलत्रमपि मे सर्वं विलुप्तं क्षणात् ॥ (ख)

॥ चिन्तां नाटयित्वा दीर्घञ्च निश्वस्य सवैक्लव्यम् ॥ अहह !

शोचन्ती रजनीषु दैन्यविधुरा नूनं कृशाङ्गी मया
कर्त्तव्यं किल चिन्तयत्यनुदिनं सा निष्क्रयं चेतसा ।
प्राणानामवलम्बनं च कुरुते भूयोऽपि मे सङ्गमे
हा ! कष्टं तदिमां दशामुपगतं पापं न सा वेत्ति माम् ॥ (ग)

॥ निश्वस्य ॥ हा वत्स रोहिताश्व !

---

(ख) मामिति । प्रभवता महाप्रभावेण तेन मुनिना क्रुद्धेन कुपितेन सता आनम्रशिरोधरः आनतग्रीवं मां राज्यश्रिया विश्लेषयता वियोजयतापि यत् त्वयं न निःशेषितं न गृहीतमित्यर्थः तत्रापि तस्मिन् त्रयेऽपि व्यसनप्रियेण विपत्प्रियेण विधिना दैवेन तथा निष्ठुरं प्रवृत्तं आचरितं येन आचरितेन मे मम आत्मा तनयः कलत्रं पत्नी अपि त्रितयमेतदित्यर्थः सर्वं क्षणात् विलुप्तं विध्वस्तम् । शार्दूलविक्रीडितं वृत्तम् ।

(ग) शोचन्तीति सा मत्प्रिया नूनं निश्चितं मया वियुक्तेति शेषः रजनीषु शोचन्ती शोकपरा दैन्यविधुरा दैन्येन दुरवस्थया विधुरा कातरा कृशाङ्गी क्षीणकलेवरा सती अनुदिनं चेतसा कर्त्तव्यं निष्क्रयं कथं प्रभोः सकाशात् आत्ममोचनं करोमीत्येवं रूपं चिन्तयति किल । भूयः पुनरपि मत्सङ्गमे मत्सङ्गार्थं निमित्तार्थे सप्तमी । प्राणानामवलम्बनं धारणं कुरुते च । हा इति खेदसूचकमव्ययं कष्टं तत् सा इमां

धात्रीजनाङ्कशतदुर्ललितः कथं नु
भूमौ चिरं लुठसि वत्स ! विरूढ़-निद्रः।
त्वामद्य पार्थिवशतैरभिनन्दिताज्ञम्
आज्ञापयन्ति वटवः श्रुत-दुर्ग-रूढ़ाः॥ (घ)

॥ चिरं विचिन्त्य सकरुणम् ॥

सज्जो मौलिरयं पतन्तु विपदस्तासां कृतं स्वागतं
यत् सत्यं कृतकृत्य-सुस्थ-मनसां तुल्या विपत् सम्पदा।
वत्स ! त्वं तु दुनोषि मेऽद्य हृदयं येनाङ्कशय्योचितः
क्रूरेणाकृतकृत्य एव सहसा दष्टोऽसि दैवाहिना॥ (ङ)

---

दृशां चाण्डालदास्यमिति भावः उपगतं प्राप्तं पापं मां न वेत्ति न जानाति। शार्दूलविक्रीड़ितं वृत्तम्।

(घ) धात्रीति। हे वत्स ! त्वं धात्रीजनानाम् अङ्कशतेषु शत-शतोत्सङ्गेषु दुर्ललितः चपलत्वात् ताभिः दुःखेन लालित इत्यर्थः इदानीं कथं नु केन प्रकारेण वा विरूढनिद्रः प्राप्तनिद्रः चिरं भूमौ लुठसि ? अद्य श्रुतानि शास्त्राणि एव दुर्गाणि दुर्गमवस्तूनि तेषु रूढाः प्रसिद्धिं गताः शास्त्रपारगा इत्यर्थः वटवः ब्राह्मणाः पार्थिवानां राज्ञां शतैः अभिनन्दिता प्रतिपालिता आज्ञा यस्य तादृशं त्वाम् आज्ञापयन्ति भृत्यवत् कर्मणि नियोजयन्ति। वसन्ततिलकं वृत्तम्।

(ङ) सज्ज इति। अयं मौलिः शिरः सज्जः अहणार्थं प्रस्तुतः, विपदः, पतन्तु आगच्छन्त्विति शेषः, तासां विपदां स्वागतं कृतं हे विपदः सुखेन आगता यूयमिति सम्भाषितमिति भावः। कृतं कृत्यं कार्यं यैः ते कृतकृत्याः कृतकार्य्याः अतएव सुस्थं मनो येषां तादृशाः कृतकृत्याश्च ते सुस्थमनसश्चेति तथोक्तानां विपद् सम्पदा तुल्या इति यत् तत् सत्यम्। यदाहं कृत्यं सम्पादितवानस्मि तदा तेनैव सुस्थ-चित्ततया विपदं न गणयामीति भावः। हे-वत्स ! त्वं तु त्वमेव अद्य

॥ साशङ्कम् ॥ शान्तं पापं प्रतिहतममङ्गलं वत्सस्य ।
क्रूरेणाकृतकृत्य एव गमितो दैवेन कष्टां दशाम् ॥

वामाक्षिस्पन्दनं सूचयित्वा दक्षिणभुजस्फुरणञ्च, सहर्षम् ।

स्पन्दते वामनयनं बाहुः स्फुरति दक्षिणः ।
व्यसनाभ्युदयौ प्राप्ताविदं कथयतीव मे ॥ (च)

॥ विचिन्त्य ॥ अथवा किमद्यापि व्यसनाभ्युदय चिन्तया ? पर्य्याप्तः खलु दुरात्मा हरिश्चन्द्रहतकः । तथाहि

अतःपरं यद्व्यसनं नूनमभ्युदयो हि सः ।
पापस्याभ्युदय-द्वारम् इदानीं मरणं हि मे ॥ (छ)

॥ प्रविश्यापटाक्षेपेण चण्डालः ॥

चण्डालः ॥ अले शुदस्स । (१)

राजा ॥ साशङ्कम् ॥ भद्र ! किम् सुतस्य ?

चण्डालः ॥ अले ! एव्वं भणामि, जधा शुदश्श वल्लभश्श पाश-पड़िवत्तिणी इत्थिया कलुणं कलुणं रोअन्ती

(१) अरे सुतस्य ।

(२) अरे ! एवं भणामि, यथा सुतस्य वल्लभस्य पार्श्वपरिवर्त्तिनी

मे मम हृदयं दुनोषि तापयसि, येन, क्रूरेण दैवेनैव अहिः पन्नगः तेन मम अङ्कएव शय्या तस्याम् उचितः अभ्यस्तावस्थान इत्यर्थः त्वम् अकृतकृत्यः बालकत्वात् किमपि कार्य्यं सुखभोगादिकमकुर्वन्नेव सहसा दृष्टः असि ? । शार्दूलविक्रीड़ितं वृत्तम् ।

(च) स्पन्दते इति । वामं नयनं स्पन्दते चलति, दक्षिणश्च बाहुः स्फुरति । इदं वामनयनस्पन्दनदक्षिणबाहुस्फुरणं मे मम व्यसनाभ्युदयौ विपत्सम्पदौ प्राप्तौ आगतौ कथयतीव सूचयतीव । पर्य्याप्तः व्यसनस्य अभ्युदयस्य च परां काष्ठां प्राप्त इत्यर्थः ।

(छ) अत इति । अतः अस्मात् चाण्डालदासात् परं यत् व्यसनं

चिट्ठदि ता तुलिअं तुलिअं गदुअ गेह्ल से शुद्धकम्बलं, अहम्पि सामिणो सआसं जेव्व गच्छामि (२)। इति निष्क्रान्तः ॥

राजा ॥ परिक्रामति ।

॥ नेपथ्ये ॥ हा जाद ! कहिं सि, देहि मे पड़िवअणं ।(३)

राजा ॥ श्रुत्वा सकरुणम् ॥ अहह ! दारुणः प्रलापः ।

॥ ततः प्रविशति यथानिर्दिष्टा वैक्लव्यं नाटयन्ती शैव्या ॥

शैव्या ॥ हा जाद ! कहिं सि, देहि मे पड़िवअणं ॥ इति स्तम्भं नाटयित्वा चिरं संज्ञां लब्ध्वा वास्नम् ॥ हा जाद ! ण जुत्तं दाणिं पिदुणावि दे जधा परिच्चत्ता तधा तुमंवि मं मन्दभाइणीं परिच्चअसि (४) ॥ इति मोहं नाटयति ॥

राजा ॥ श्रुत्वावलोक्य च सवैक्लव्यम् ॥ कथमियमपि तपस्विनी भर्त्रा परित्यक्ता ? सर्वथा सर्वत्र निष्करुणता हतविधेः ।

शैव्या ॥ ससम्भ्रममुत्थाय ॥ किं खु एदं वट्टदि, कहिं गदो

---

स्त्री करुणं करुणं रुदती तिष्ठति, तद् त्वरितं त्वरितं गत्वा गृहा-णास्याः शुद्धकम्बलः । अहमपि स्वामिनः सकाशमेव गच्छामि ।

(३) हा जात ! कुत्रासि, देहि मे प्रतिवचनम् ।

(४) हा जात ! हा जात ! कुत्रासि, देहि मे प्रतिवचनम् । हा जात ! न युक्तमिदानीं पित्रापि ते यथा परित्यक्ता तथा त्वमपि मां मन्दभागिनीं परित्यजसि ।

(५) किं खलु इदं वर्त्तते कुत्र गतो मे पुत्रः ? । पुत्र ! किमिति

---

विपद् स नूनं निश्चितम् अभ्युदयः हि मङ्गलमेव, इदानीं पापस्य मे मम अभ्युदयस्य मङ्गलस्य द्वारं मरणं हि मृत्युरेव ।

मे पुत्तओ ॥ दृष्ट्वा परिष्वज्य ॥ पुत्तआ! किंत्ति मं णालवसि? एआइणी भाआमि क्खु अहं, किं ण पेक्खसि एदं भीसणं महाप्मसाणं? ॥ सोन्मादम् ॥ किं भणासि? उअज्झाअस्स कालणादो कुसुमाइं अवचिणन्तो कोड़रादो णिक्कमिअ कह्लाहिणा (ज) दट्टम्हि? ॥ ससम्भ्रमम् ॥ कहिं कहिं सो कह्लाहि, किं त्ति मं ण दंसेदि ॥ समन्तादवलोक्य ॥ अलिअं अलिअं, कुदो एत्थ कह्लाहि ॥ उपविश्य सकरुणम् ॥ हा जाद! उत्थेहि, उवणेहि दाव उअज्झाअस्स अखंडिदाइं मालूर-वत्ताइं, तिलक्खेत्त-सम्भवाइं दब्भंकुराइं, अदिक्कामदि से होमवेला, पड़िणिउत्ता दाणिं सव्वे बह्मआरिणो हुविस्सन्ति ॥ उत्थापयितुमिच्छन्ती सावेगम् ॥ कध सच्चकं जेव्व मं मन्दभाइणीं समुज्झिअ दूरं गदोसि! हा हदह्मि मन्दभाइणी! (५) इति मूर्च्छां नाटयति ॥

---

मां न आलपसि? एकाकिनी बिभेमि खल्वहम्, किं न प्रेचसे एतत् भीषणं महाश्मशानम्? किं भणसि? उपाध्यायस्य कारणात् कुसुमान्यवचिन्वन् कोटरात् निष्क्रम्य कृष्णाहिना दष्टोऽस्मि? कुत्र कुत्र स कृष्णाहिः? । किमिति मां न दर्शयति? अलीकम् अलीकम्, कुतोऽत्र कृष्णाहिः? । हा जात! उत्तिष्ठ उपनय तावदुपाध्यायस्य अखण्डितानि मालूरपत्राणि, तिलचेत्र-सम्भवान् दर्भाङ्कुरान् । अतिक्रामति तस्य होमवेला, प्रतिनिवृत्ता इदानीं सर्वे ब्रह्मचारिणो भविष्यन्ति, कथं सत्यमेव मां मन्दभागिनीं समुज्झ्य दूरं गतोऽसि? हा! हतास्मि मन्दभागिनी ।

---

(ज) कृष्णाहिना कालसर्पेण । मालूरपत्राणि विल्वपत्राणि अखण्डितानि अच्छिन्नानि । दर्भाङ्कुरान् कुशाङ्कुरान् समुज्झ्य परित्यज्य ।

राजा ॥ सवैक्लव्यम् ॥ कष्टमकरुणस्यापि तस्य विधेरमी सुदुःश्रवा व्यवहाराः (झ) ।

शैव्या ॥ संज्ञां लब्ध्वा सोपालम्भम् ॥ हा अज्जउत्त ! पेक्ख दाणिं अङ्कदुल्ललिदस्स संपदं अवत्थन्तरं ! सव्वदा णिक्किव कहिं दाणिं विसत्थहिअओ चिट्ठसि ! अस्सं च तुए अहं समादिट्ठा जं पअत्तेन पालणीओ एसो दे बालओ, तं च मए पावसीलाए तधा ण पड़िवस्सम् (६) ।

राजा ॥ सविशेषकरुणम् ॥ अहो ! मर्म्मस्पृशि (ञ) परिदेवितानि ।

शैव्या ॥ सस्पृहं सुतस्य मत्यङ्गमालोक्य ॥ हा पुत्तअ ! एदं खु दे सुद्ध-मिअङ्क-भासुर-णिडालवट्टं, इमे सुसिणिद्ध पह्मले

---

(६) हा आर्यपुत्र ! पश्येदानीम् अङ्कदुर्ललितस्य साम्प्रतमवस्थान्तरम् ! सर्वथा निष्कृप ! कुत्र इदानीं विश्वस्तहृदयस्तिष्ठसि ? अन्यच्च त्वया अहं समादिष्टा यत् प्रयत्नेन पालनीय एष ते बालकः, तच्च मया पापशीलया तथा न प्रतिपन्नम् ।

(७) हा पुत्र ! एष खलु मुग्धमृगाङ्क-भास्वर-ललाटपटः, इमे सुस्निग्धपक्ष्मले पर्य्यन्तपाटले स्निग्धधवले लोचने, इदं च सुघटितास्थि-

---

(झ) व्यवहारा आचरणानि सुदुःश्रवाः दुःखेनापि श्रोतुमशक्या इत्यर्थः ।

(ञ) मर्मस्पृंशि मर्मविदारणानि इत्यर्थः परिदेवितानि विलापाः ।

(ट) मुग्धेत्यादि । मुग्धः मनोहरः यः मृगाङ्कः चन्द्रः तद्वत् भास्वरः दीप्यमानः ललाटपट्टः सुस्निग्धे स्नेहातिस्राविणी पक्ष्मले घनलोमाढ्ये पर्य्यन्तपाटले प्रान्तरक्ते । सुघटितः शोभनं यथा तथा

पज्जत्तपाटले सिणिद्ध-धवले लोअणे, अअञ्च सुहडिदट्ठिमन्तो कठिण-वित्थिस-वक्खत्थलो; ता किं एत्थ सरीरे अलक्खणं सन्दिट्टं कअन्तहदएण ? तधा सव्वसन्धस्स अज्जउत्तस्स मम मन्दभाइणीए चरिदे पमादो । सव्वधा अआरणो धम्मो, अप्पमाणं च लक्खणं, अलिअ वादिणो विण्णाण इत्तआ, जदो बहुसो दिट्ठपच्च एहिं समादिट्ठम्हि सामुद्दलक्खणेहिं, जधा वंस-वड्ढणो दीहाउ' चक्कवत्ती एसो पुत्तओ दे भविस्सदि त्ति । ता मम मन्दभाइणीए भाअधेएहिं सव्वं अलिअं संवुत्तं । (ट)(७)

राजा ॥ साशङ्कम् ॥ कथं संवादिनी (ठ) वर्त्तते ॥ निपुण-मवलोक्य साश्रम् ॥ अये ! कथम् ।

---

वक्षः कठिन-विस्तीर्णं वक्षःस्थलम्, तत् किमत्र शरीरे अलक्षणं संदृष्टं कृतान्तहतकेन ? तथा सत्यसन्धस्यार्य्यपुत्रस्य मम मन्दभागिन्याश्चरिते प्रमादः । सर्व्वथा अकारणो धर्मः, अप्रमाणञ्च लक्षणम्, अलीकवादिनो विज्ञान-वेत्तारः । यतो बहुशो दृष्टप्रत्ययैः समादिष्टास्मि सामुद्रकविचक्षणैः, यथा वंशवर्द्धनो दीर्घायुश्चक्रवर्त्ती एष पुत्रस्ते भविष्यतीति, तन् मम मन्दभागिन्याः भागधेयैः सर्व्वम् अलीकं संवृत्तम् ।

---

रचितः अस्याः वक्षः यत्र तादृशं कठिनं घनं विस्तीर्णं विशालञ्च । अलक्षणं दुष्टचिह्नम् । कृतान्तहतकेन दुष्टशमनेन वा दुर्दैवेन कृतान्तो यमदैवयोरित्यमरः । सत्यसन्धस्य सत्यव्रतस्य प्रमादः दोषः मन्दभाग्यया मयैव किमपि दुश्चरितं येन आर्य्यपुत्रस्य पुत्रविघातो जात इति भावः । अलीकवादिनः मृषावादरताः । दृष्टप्रत्ययैः दृष्टविश्वस्तकर्मभिरित्यर्थः सामुद्रिकविचक्षणैः लक्षणनिरूपकशास्त्राभिज्ञैः ।

(ठ) संवादिनी मत्सम्बद्धेव प्रतीयमाना इत्यर्थः ।

छत्राकारमिदं शिरः पृथुललाटान्तं विशालेक्षणं,
चक्राङ्कौ, चरणौ,करौ सकमलावाजानुलम्बौ भुजौ ।
क्षामं मध्यमुरो विशालमुदरं तुच्छं कटिः पीवरा
नूनं भूपकुलाङ्कुरः शिशुरयं साम्राज्यचिह्नाङ्कितः ॥(ङ)

॥ स्तुतिमभिनीय सवैक्लव्यम् ॥ मे रोहिताश्वो नूनमस्यामेव वयोऽवस्थायां वर्त्तते, तदभिशङ्कते मे हृदयम् । अथवा प्रतिहतममङ्गलं वत्सस्य ।

शैव्या ॥ सोपालम्भमाकाशे ॥ भअवं कोसिअ ! किदत्थो दाणिं सि । (८)

राजा ॥ सावेगम् ॥ कथं भगवन्तं कौशिकमुपालभते । सर्वथा न किञ्चित् विसंवदति । (ढ) तदलं परपरिग्रहशङ्कया शैव्यैवेयम् ॥ चिरमवलोक्य सकरुणम् ॥ कृतमद्यापि सन्देहेन । कुतः,

---

(८) भगवन् ! कौशिक ! कृतार्थः इदानीमसि ।

---

(ङ) छत्रेति । छत्राकारं मण्डलाकारं पृथुललाटान्तं दीर्घभालभागं विशालेक्षणम् आयतनेत्रम् इदं शिरः । चरणौ चक्रेण चक्राकारचिह्नेन अङ्कौ अङ्कितौ अलङ्कृतावित्यर्थः । करौ पाणी सकमलौ पद्मचिह्नितौ, भुजौ बाहू आजानुलम्बौ जानुपर्य्यन्तलम्बिनौ । मध्यं मध्यभागः क्षामं क्षीणम् उरः वक्षस्थलं विशालं विस्तीर्णम् । उदरं तुच्छं स्वल्पमित्यर्थः । कटिः पीवरा स्थूला । अयं शिशुः साम्राज्यचिह्नैः अङ्कितः अलङ्कृतः अतएव नूनं निश्चितं भूपकुलाङ्कुरः कस्यचित् राज्ञः तनय इत्यर्थः ।

(ढ) विसंवदति । सन्देहयति ।

सा वाणी करुणार्त्तनाद विकलाप्यामन्द्र-तन्त्री-स्वना
ते चामी भ्रमरौघ नील कुटिलाः पर्य्याकुला मूर्द्धजाः।
तान्यङ्गानि कृशान्यमूनि सहसा दुःप्रत्यभिज्ञानि मे
कान्तिःसैव पुराण-चित्र-मलिना लेखाभिरुन्नीयते ॥ (ण)

हा वत्स रोहिताश्व! क्वासि, मे देहि प्रतिवचनम् ॥इति मूर्च्छितः पतति ॥ संज्ञां लब्ध्वा रोहिताश्वस्य मुखमवलोक्य॥ अनुम्रियमान-दशनाङ्कुरस्य स्मरामि शैशवं मन्दभाग्यः।

प्रथित-मङ्गल-गुग्गुलु कल्पित-
प्रतनु-लोल-जटावलि मण्डितम्।
मधुप-लङ्घित-मुग्ध-सरोरुह-
द्युति मुखं तदिदं न विराजते ॥ (त)

---

(ण) सेति। करुणैः शोकपूर्णैः आर्त्तनादैः विकला विस्वरापि आमन्द्रः ईषद्गम्भीरः तन्त्र्या इव स्वनः यस्यां तादृशी सा पूर्वानुभूता इत्यर्थः वाणी, अमी च भ्रमराणाम् ओघाः समूहा इव नीलाः कुटिलाः भङ्गिमन्तश्च ते मूर्द्धजाः केशाः पर्य्याकुलाः बन्धनाभावात् इतस्ततो विलुलिताः। तानि अमूनि अङ्गानि कृशानि दुःखक्षीणानि अतएव मे सहसा दुःखेन प्रत्यभिज्ञानि सैवेयमिति प्रत्यभिज्ञातुं शक्यानि पुराणं प्राचीनं यत् चित्रम् आलेख्यं तद्वत् मलिना सैव कान्तिः लेखाभिः रेखाभिः उन्नीयते अनुभूयते।

(त) प्रथितेति। प्रथितः विख्यातः यः मङ्गलगुग्गुलुः माङ्गलिकगन्धद्रव्यविशेषः तेन कल्पिता रचिता प्रतनुः सूक्ष्मा या जटावलिः तया मण्डितं भूषितम् अतएव मधुपैः भृङ्गैः लङ्घितम् आक्रान्तं यत् मुग्धं मनोज्ञं सरोरुहं कमलं तद्वत् द्युतिः कान्तिर्यस्य तथाविधं तत् इदं मुखं न विराजते न शोभते विपद्व्याप्ततया मालिन्यादिति भावः। द्रुतविलम्बितं वृत्तम्।

हा वत्स रोहिताश्व ! हा (च) तपन कुल-बाल-प्रवाल ! हा हरिश्चन्द्र-हृदयानन्दन ! हा कुपित-कौशिक-दक्षिणा-ऽऽनृण्य-प्रधान-पण्य !

नेष्टं न दत्तं न कुलोचितानि
सुखान्यवाप्तानि यशो न कीर्णम् ।
न्यग्रोध-वीजाङ्कुरमूषरस्थं
विडम्बयन् वत्स ! दिवं गतोऽसि ॥ (छ)

अपिच । वत्स !

मूर्द्धाऽभिषेक-पयसा न पवित्रितस्ते ।
दानैः करौ, न चरणावरि-मौलि-पातैः ।
जातौ धनुर्गुणकिणाङ्कधरौ न बाहू
लब्धोदयः प्रतिपदिन्दुरिवासि नष्टः ॥ (ज)

---

(च) तपनेति । तपनस्य सूर्य्यस्य कुलं तस्य बालः नवः प्रवालः पल्लवः तत्सम्बुद्धौ । कुपितेति । कुपितः यः कौशिकः विश्वामित्रः तस्य दक्षिणाया आनृण्ये प्रधानं मुख्यं पण्यं विक्रेयद्रव्यं तत्सम्बुद्धौ ।

(छ) नेष्टमिति । हे वत्स ! त्वया न इष्टं न यज्ञेन देवास्तर्पिता इत्यर्थः, न दत्तम् अर्थिभ्यः धनमिति शेषः । कुलोचितानि सुखानि राजसम्पद्भोगजनितानीति शेषः । न अवाप्तानि न प्राप्तानि, यशः न कीर्णं न विस्तीर्णम् । ऊषरस्थं क्षारभूमिस्थं न्यग्रोधस्य वटस्य वीजाङ्कुरं विडम्बयन् अनुकुर्वन् दिवं स्वर्गं गतः प्राप्तः असि । उपजाति-वृत्तम् ।

(ज) मूर्द्धेति । ते तव मूर्द्धा शिरः अभिषेकपयसा राज्याभिषेक-मन्त्रपूतेन जलेन न पवित्रितः न पवित्रीकृतः । त्वं राज्ये नाभिषिक्त इति भावः । दानैः करौ न पवित्रिताविति शेषः । चरणौ अरीणां

॥ विचिन्त्य ॥ तत् किमिहोपसृत्य (न) विलपन्त्या देव्याः कथयाम्यात्मानम्? अथवा न युक्तमिमां तनय-शोक-दह्य-मानां तपस्विनीं स्वदशा-विपर्य्ययेणापरेणोद्घट्टयितुम्। आत्मानमवलोक्य ॥ दुरात्मन्! हरिश्चन्द्रहतक! कथमद्यापि न म्रियसे? किमतः-परं द्रक्ष्यसि? इति मूर्च्छां नाटयति शनैरु-न्मील्य ॥ दुरात्मन्! हरिश्चन्द्रहतक! यदेतान् इदानीमपि हतप्राणान् न परित्यजसि तत् किमात्मघातिनो लोका-दात्मानं परित्रातुमिच्छसि? धिङ्मूर्ख!

वरमद्यैव निर्मज्जन् अन्धे तमसि दारुणे।
पुत्राननेन्दु-रहिता न पुनर्वीक्षिता दिशः॥ (प)

अपिच

अन्धं तमः क्रकच भैरव-पूय-वीची-
चण्डासिपत्रवन-रौरव-शाल्मलीषु।

---

शत्रूणां मौलिपातैः शिरोनमनैः न पविलुलिताविति शेषः, शार्ङ्ग धनुषः यः गुणः मौर्वी तस्य किण एव अङ्कः तस्य धरौ धनुर्गुणकिणाङ्किता-वित्यर्थः न जातौ। अतस्त्वं लब्धोदयः प्राप्तोदयः प्रतिपदः इन्दुश्चन्द्र इव नष्टोऽसि। वसन्ततिलकं वृत्तम्।

(न) उपसृत्य उपगम्य। स्वदशेति। स्वस्य आत्मनः दशाविपर्य्ययेण चण्डालदासत्वरूपेण इत्यर्थः। उद्घट्टयितुं क्षोभयितुम्।

(प) वरमिति। अद्यैव इदानीमेव दारुणे अन्धे तमसि तदाख्ये निरये निर्मज्जन् पतन् त्वं वरं मनाक् प्रियः। पुत्रस्य आननेन्दुना मुखचन्द्रेण रहिता दिशः न पुनः वीक्षिताः (दृष्टा भवन्तु इति शेषः।

(फ) अन्धमिति। तनयविक्लवजेन पुत्रनिधनजनितेन दुःखेन तुल्याः या यातनाः ताः अन्धं तमः क्रकचभैरवं पूयवीचि, चण्डासि-

नैतेषु सन्ति नरकेष्वपि यातनास्ता

दुःखेन यास्तनय विप्लवजेन तुल्याः ॥ (फ)

तदलं विलम्बेन। भवतु, भागीरथी-तटोपान्तेषु सुतशोकाग्नि-दह्यमानमात्मानं निर्वापयामि (ब)॥ इति मन्दं परिक्रम्य स्मृतिमभिनीय समस्त्रमम् ॥ अहह ! मनाक् पराधीनमात्मानं विस्मृतोऽस्मि ! ॥ विचिन्त्य सवैक्लव्यम् ॥ कष्टं भोः कष्टम् !

मरणात् निर्वृतिं यान्ति धन्याः स्वाधीनवृत्तयः।

आत्म-विक्रयिणः पापाः प्राणत्यागेऽप्यनीश्वराः ॥ (भ)

॥ वैक्लव्यं नाटयित्वा ॥ तदस्मादपि मनोरथाद् भ्रष्टोऽस्मि मन्दभाग्यः कुतः,

दारुणस्यास्य दुःखस्य धैर्य्यमस्त्येव भेषजम्।

दुर्वार-विनिपातोऽयं भर्त्तुराज्ञा-व्यतिक्रमः ॥ (म)

॥ भावष्टम्भम् ॥ तद् यावदिदानीम् असह्य-शोकाग्नि-दह्यमान-मात्मानं विवेकवारिणा संस्तभ्य भर्त्तुराज्ञां प्रमाणीकरोमि। यतः।

---

पलयनं रौरवं शाल्मली चेति तथोक्तेषु एतेषु नरकेष्वपि ता यातनाः न सन्ति। अत्र तम इति अलुक्समासो बोध्यः। वसन्ततिलकं वृत्तम्।

(ब) निर्वापयामि निहन्मि। मनाक् अल्पम्।

(भ) मरणादिति। स्वाधीनवृत्तयः जनाः धन्याः पुण्यवन्तः, ते मरणात् निर्वृतिं सर्वदुःखशान्तिं यान्ति प्राप्नुवन्ति। पापाः आत्म-विक्रयिणः प्राणत्यागेऽपि अनीश्वराः असमर्थाः।

(म) दारुणस्येति। धैर्य्यम् अस्य दारुणस्य दुःखस्य भेषजम् औषधम् अस्त्येव। अयं तु भर्त्तुः आज्ञाव्यतिक्रमः आदेशाप्रतिपालनं दुर्वारः दुर्निवारः विनिपातः अधोगतिः यस्मात् तथाविधः।

मध्ये व्यक्तमनादि-विभ्रमवशादव्यक्तमाद्यन्तयोः
पञ्चत्वं प्रकृतिः किलास्य जगतस्तत् पञ्चधा सम्भृतम्।
संसारार्णव वीचि-भङ्ग-बलनैर्योगा वियोगैः समा-
स्तन्मोहादपरं स वेद्मि विदुषां शोकस्य यत् कारणम् ॥(य)

शैव्या ॥ संज्ञां लब्ध्वा ॥ कधं एदं हदजीविदं ण मं परिच्चअदि, ता किं णु क्खु एत्थ करणिज्जं ?॥ अश्रूणि परिमृज्य ॥ भोदु एदस्सिं मसाण-पादवे अत्ताणअं उल्लम्बिअ वावादइस्सं। (८) इति पाशं रचयति।

---

८) कथमिदं हतजीवितं न मां परित्यजति। तत् किं नु खल्वत्र करणीयम् ?। भवतु एतस्मिन् श्मशानपादपे आत्मानं उद्बध्य व्यापादयिष्ये।

---

(य) मध्ये इति। यत् जगत् अनादिविभ्रमवशात् अनादेः पुरुषस्य परमात्मन इत्यर्थः विभ्रमः विलासः तद्वशात् तदिच्छयेति भावः मध्ये व्यक्तं प्रकाशं गतम् आद्यन्तयोस्तु अव्यक्तम् अज्ञातं सर्वमिदं विश्वं मध्ये कियतः कालात् दृश्यते किन्तु आदिरन्तश्च कैरपि न विदित इत्यर्थः पञ्चत्वं निधनं जड़भाव इत्यर्थः अस्य जगतः प्रकृतिः स्वभावः, तत् पञ्चत्वञ्च पञ्चधा पञ्चप्रकारेण सम्भृतं सम्पन्नं पञ्चभिः भूतैरेव देहः सृज्यते तानि च भूतानि जड़पदार्था एव देहस्थितस्यात्मनो व्यपगमात् देहस्थिताः पञ्च भूतांशाः पञ्चस्वेव प्रलीयन्ते तदेव पञ्चत्वमिति भावः। संसारे अमी योगाः पुत्रकलत्रादिसङ्गाः अर्णवस्य समुद्रस्य वीचीनां तरङ्गाणां भङ्गवत् दलनैः वियोगैः विच्छेदैः समाः तुल्याः, यथा समुद्रे तरङ्गा उत्थिता एव प्रलीयन्ते तद्वत् संसारे प्रियसङ्गा इति भावः। तत् तस्मात् विदुषां जानतां शोकस्य यत् कारणं तत् मोहात् अज्ञानात् अपरम् अन्यत् न वेद्मि न जानामि मोह एव शोककारणमिति भावः। शार्दूलविक्रीड़ितं वृत्तम्।

राजा ॥ दृष्ट्वा ससम्भ्रमम् ॥ अहह ! इदमपरमापतितं जीवित-व्यसन-फलम्। तत्किं करोमि मन्दभाग्यः ॥ विचिन्त्य ॥ भवत्वेवं तावत् ॥ इति अन्यतो गत्वा ॥ मरणान्निर्वृतिं यान्ति इत्यादि पठति ॥

स्वकर्म्म-वैचित्र-विपाक-विभ्रमै-
र्विरूढ़-मार्गाः परलोक-भूमयः।
विहाय मायामवशस्य भूरियं
विहस्यते सा किल पारलौकिकैः ॥ (२)

शैव्या ॥ आकर्ण्य ससम्भ्रमं पाशमुत्सृज्य ॥ हद्धि हद्धि ! मरण-मङ्गसवासत्त-हिअआए पराधीण-जीविदाए दासत्तणं वि मए विसुमरिदं। अण्णस्सिं वि जम्मन्तरे इमादो दास-भावादो ण विमुक्का भविस्सं ॥ऊर्द्ध्वमवलोक्य दीर्घं निश्वस्य ॥ भअवं देव्व ! मरिदुं वि ण लब्भदि भअवदो सआसादो। ता

---

(१०) हा धिक् हा धिक् ! मरण-महोत्सव-व्यासक्तहृदयया-पराधीनजीवितया दासत्वमपि मया विस्मृतम्। अन्यस्मिन् जन्मान्तरे अस्माद्दासभावान्न विमुक्ता भविष्यामि। भगवन् ! देव ! मर्त्तुमपि न

---

(२) स्वकर्मेति। स्वकर्मणां वैचित्रस्य विविधत्वस्य यः विपाकः परिणामः तस्य विभ्रमैः विलासैः परलोकभूमयः विरूढा विख्याता मार्गाः पन्थानः यासां ताः कर्मवशेन लोकाः विविधां पारलौकिकीं गतिं लभन्ते इति भावः अतः पारलौकिकैः परलोकतत्त्वविद्भिर्ज्ञनैः मायां संसारस्नेहं विहाय परित्यज्य सा इयम् अवशस्य अजितेन्द्रियस्य जनस्य इत्यर्थः भूः चैतं संसार इत्यर्थः विहस्यते अवज्ञायते इत्यर्थः। वंशस्थविलं वृत्तं वदन्ति वंशस्थविलं जतौ जराविति तल्लक्षणात्।

म्हि मन्दभाइणी ॥ इति आत्मानं पातयित्वा सहसोत्थाय अश्रूणि प्रसृज्य ॥ किंत्तिअं दाणिं अप्पदीआर-दालुणे दसा-विसंवादे परिदेविदव्वं, ता कालोचिदं कदुअ दासित्तण-समुचिदाए सुस्सूसाए दिअवरं आराधअन्तो व्वदोववास णिअमेहिं अत्ताणअं परिसोसइस्सं । जधा ण इमस्सिं मणुस्स-लोए पुणो वि सम्भविस्सं मन्दभाइणी (१०)॥ इति चितां रचयति ॥

राजा ॥ इष्टा सकरुणम् ॥ अये ! आरब्धमनया कालोचितम् ॥ आत्मगतम् ॥ साधु देवि ! साधु ! नास्यामप्यवस्थायाम् अतिक्रान्तमाभिजात्यम् (ल) । तदहमिदानीमुपसृत्य भर्त्तुराज्ञां प्रमाणीकरोमि ॥ तथा कृत्वा सशङ्क्य च ॥ देवि ! ॥ इत्यर्द्धोक्ते सखमात्मगतम् ॥ महाभागे !

अकृत्वा मत्परिज्ञानम्, अदत्वा मृतकम्बलम् ।
प्रवर्त्तनीयाः केनापि न श्मशानोचिताः क्रियाः ॥

तदुपनीयतां मे मृतकम्बलः ॥ इति सवाष्पस्तम्भं करं प्रसारयति

शैव्या । भयं नाटयन्ती ॥ भद्दमुह ! दूरदो चिट्ठ । अहं दे उवणइस्सं । (११)

---

लभ्यते । भगवतः सकाशात् तत् हतास्मि मन्दभागिनी कियदिदानीम् अप्रतीकार-दारुणे दशाविसंवादे परिदेवितव्यम् । तत् कालोचितं कृत्वा दासत्वसमुचितया शुश्रूषया द्विजवरमाराधयन्ती व्रतोपवासनियमैरात्मानं परिशोषयिष्ये । यथा न अस्मिन् मनुष्य-लोके पुनरपि सम्भविष्यामि मन्दभागिनी ।

(११) भद्रमुख ! दूरतस्तिष्ठ, अहं ते उपनेष्यामि ।

---

(ल) आभिजात्यं कौलीन्यम् ।

राजा । व्रीडां नाटयित्वा ॥ स्थितः ।

शैव्या ॥ रोहिताश्वस्य शरीरात् पटमाक्षिप्य कर्षयन्ती, हस्तं समालोक्य सविस्मयमात्मगतम् ॥ कधं चक्कवत्ति-लक्खण-सणाहो वि अअं पाणी इमस्स वावारस्स उवणोदो ? ॥ अपसृत्य शनैः प्रत्यक्षमवलोक्य सप्रत्यभिज्ञानम् ॥ कधं अज्जउत्तो ? ससम्भ्रमम् ॥ हा अज्जउत्त ! परित्ताहि परित्ताहि (१२) ॥ इति आत्मानं पातयति ॥

राजा ॥ अपसृत्य ॥ देवि ! न मां श्वपाक-(व)दास्य-दूषितं स्प्रष्टुमर्हसि । तत् समाश्वसिहि समाश्वसिहि ।

शैव्या ॥ समाश्वस्य ॥ हद्धी हद्धी किमेदं ? । (१३)

राजा ॥ कर्म्मणां विपाकः । तदलं परिदेवितेन उपनीयतामेतत् ।

शैव्या ॥ सवैलक्ष्यमर्पयति ॥ आकाशात् पुष्पवृष्टिः ॥ उभौ सविस्मयमवलोकयतः ।

राजा ॥ कथमाकाशात् पुष्पवृष्टिः ?

॥ नेपथ्ये ॥

अहो ! दानमहो ! शीलम्, अहो ! धैर्य्यमहो ! क्षमा ।
अहो ! सत्यमहो ! ज्ञानं हरिश्चन्द्रस्य धीमतः ॥

---

(१२) कथं चक्रवर्त्तिलक्षण-सनाथोऽप्ययं पाणिरेतस्य व्यापारस्योपनीतः ? कथम् आर्य्यपुत्र ? हा आर्य्यपुत्र ! परित्राहि परित्राहि ।

(१३) हा धिक् ! हा धिक् ! किं न्विदम् ?

---

(व) श्वपाकेति । श्वपाकः चण्डालः तस्य दास्येन दूषितम् अपवित्रमित्यर्थः ।

शैव्या ॥ श्रुत्वा सश्लाघम् ॥ अम्मो कोदाणिं अज्जउत्तस्स गुणसलाहाए मे हिअअं आसासेदि । अहवा, अलं गुणकधाए अज्जउत्तो जदि णाम इमं अवत्थन्तरं अणुभोदि । सव्वधा अआरणो धम्मो, अरणरुदिदं सव्वं अन्धआरणच्चिदं सव्वं विसाणं । (१४)

ततः प्रविशति धर्मः

धर्मः ॥ महापतिव्रते ! महाराज हरिश्चन्द्र ! कथमहमकारणो नाम । तथाहि पश्य,

अन्येषां ये दुर्लभाः पार्थिवानां
सत्यैर्दानैरूर्ज्जितैः कर्मभिश्च ।
तानेवाहं ब्रह्म-सालोक्य पूतान्
आप्तो दातुं शाश्वतानद्य लोकान् ॥ (श)

तदलं विषादेन । वत्स रोहिताश्व ! समाश्वसिहि समाश्वसिहि

---

(१४) अहो ! क इदानीम् आर्य्यपुत्रस्य गुणश्लाघया मे हृदयमाश्वासयति । अथवा अलं गुण-कथया । आर्य्यपुत्रो यदि नाम इदमवस्थान्तरमनुभवतीति सर्वथा अकारणो धर्मः, अरण्य-रुदितं सर्वम्, अन्धकार-नर्त्तितं सर्वं विज्ञानम् ।

---

(श) अन्येषामिति । सत्यैः सत्यवचनैः दानैः ऊर्ज्जितैः महद्भिरित्यर्थः कर्मभिः यज्ञादिभिरित्यर्थः अन्येषां पार्थिवानां राज्ञां ये लोकाः दुर्लभाः दुष्प्रापाः, अहं तान् ब्रह्मसालोक्यपूतान् ब्रह्मणः परमात्मनः सालोक्येन शश्वद्दर्शनेन पवित्रितान् शाश्वतान् अक्षयान् लोकान् ब्रह्मलोकानित्यर्थः दातुम् एव आप्तः उपस्थितः ।

राजा ॥ दृष्ट्वा सहर्षम् ॥ कथं स भगवान् धर्म्मः । भगवन् ! अभिवादये ।

शैव्या ॥ भअवं ! पणमामि ।(१५)

रोहिताश्वः ॥ शनैः शनैरुन्मीलयति ।

धर्मः ।

समाश्वसिहि वत्स ! त्वं, पित्रा धर्मेण पालितः ।
गत-प्रत्यागतैः प्राणैश्चिरं पालयितुं प्रजाः ॥ (घ)

रोहिताश्वः ॥ उत्थाय ॥ कथमम्बा ? तत् केन पुनरिमं प्रदेशमानीतासि ? ।

शैव्या ॥ जाद ! अत्तणो भाअधेएहिं । (१६)

धर्मः ॥ वत्स ! अयं ब्रह्मलोकातिथिः पिता पुरत एव ।

रोहिताश्वः ॥ तात ! परित्रायस्व परित्रायस्व ॥ इत्यात्मानं पातयति ।

राजा ॥ उपसृत्य ॥ वत्स ! न मां श्वपाक-दास्य-दूषितं स्प्रष्टुमर्हसि ।

धर्मः ॥ राजन् ! अलमिदानीं कृपणैरालापैः (ङ) । तथाहि,

---

(१५) भगवन् ! प्रणमामि ।

(१६) जात! आत्मनो भागधेयैः ।

---

(घ) समाश्वसिहीति । हे वत्स ! पित्रा धर्मेण पालितः रक्षितस्त्वं गतप्रत्यागतैः गतैः पुनरागतैरित्यर्थः प्राणैः चिरं प्रजाः पालयितुं समाश्वसिहि समाश्वस्तो भव ।

(ङ) कृपणैः दीनैः आलापैः वचनैः ।

क्रीता योऽस्या ब्राह्मणस्ते सदारो
यश्चाण्डालो यत्र राज्यञ्च तत् ते।
राजन्! गुह्यं तत्त्वतो ज्ञातुमेतद्
दिव्यं चक्षुः साम्प्रतं ते ददामि॥ (ङ)

कः कोऽत्र परीवाराणाम्?

प्रविश्य पुरुषः॥ आज्ञापयतु भगवान्।

धर्मः॥ दूतो भव।

पुरुषः॥ एषोऽस्मि।

धर्मः॥ महाराज! विमानमधिरुह्य दिव्येन चक्षुषा विलोक्यतां यथेदं सर्वमिति।

राजा॥ यथादिशति भगवान्!॥ इति दिव्यं विमानमारुह्य ध्यानं नाटयन्॥ धिक्! प्रमादः धिक्! प्रमादः (च) विद्योपस्थानपरितोषितेन भगवता कौशिकेन सचिवेषु नो राज्यं प्रतिमुक्तम्।

---

(ङ) क्रीतेति। ते तव अस्याः पत्न्याः क्रीता यः सदारः सस्त्रीको ब्राह्मणः यश्चाण्डालः तव क्रीतेति भावः यत्र च ते तव तत् राज्यं वर्त्तते इति शेषः हे राजन्! एतत् गुह्यं रहस्यं सर्वं तत्त्वतः वस्तुतः ज्ञातुं साम्प्रतं ते तुभ्यं दिव्यं चक्षुः ज्ञानचक्षुरित्यर्थः ददामि। इन्द्रवज्रावृत्तम्।

(च) प्रमादः अनवधानता। विद्यानाम् उपस्थानेन राज्यानुमत्या उपस्थित्या इत्यर्थः परितोषितेन प्रसादितेन। प्रतिमुक्तं प्रत्यर्पितम्।

धर्मः ॥ राजन् ! भवत् सत्य-जिज्ञासयैवासौ मुनिस्तथा कृतवान्, नतु राज्यार्थितया, तदलं सम्भ्रमेण, (क) विशुद्धमालोक्यतां तदिदं सर्वम् ।

राजा ॥ पुनर्ध्यानं नाटयित्वा सानन्दम् ॥ देवि ! दिष्ट्या वर्द्धसे,

क्रेता स ते प्रकृति-कारुणिको द्विजन्मा
जाया-सखो ननु शिवौ किल दम्पती तौ ।
क्रेता ममापि खलु यो भगवान् स धर्म्म-
स्तेनाधुना मनसि शल्यमुपैति शान्तिम् ॥ (ख)

धर्मः ॥ तेन हि अभिषिच्यतां पृथिवी-राज्ये वत्सो रोहिताश्वः ।

राजा ॥ भगवन् ! यदादिशसि ।

धर्मः ॥ आसनम् आसनम्, छत्रं छत्रम्, चामरं चामरम्, भृङ्गारः भृङ्गारः ।

पुरुषः॥

एतत् सिंहासनमुपनतं दीप्तमाणिक्य चित्रं
छत्रञ्चैतत् परिणत-शरच्चन्द्रबिम्बानुकारि ।

---

(क) विशुद्धं निर्दोषम् ।

(ख) क्रेतेति । सः प्रकृतिकारुणिकः स्वभावदयालुः जायासखः सस्त्रीकः यः ते तव क्रेता द्विजन्मा ननु प्रिये ! तौ दम्पती जायापती शिवौ पार्वतीपरमेश्वरौ किल । यः खलु ममापि क्रेता सः भगवान् धर्मः, तेन हेतुना अधुना मनसि स्थितमिति शेषः । शल्यं चाण्डाल-दास्यादिरूपम् आत्यन्तिकं दुःखमित्यर्थः शान्तिम् उपैति प्राप्नोति । वसन्ततिलकं वृत्तम् ।

(ग) एतदिति । एतत् दीप्तैः दीप्यमानैः माणिक्यैः चित्रम्

एते ज्योत्स्ना-प्रसर-धवले चामरे हेमदण्डे
भृङ्गाराम्भस्तदिदमभितः सम्भृतं सागरेभ्यः ॥ (ग)

धर्महरिश्चन्द्रौ रोहिताश्वस्याभिषेकं नाटयतः ॥

धर्मः ॥ ऊर्द्ध्वमवलोक्य ॥ दिष्ट्या विमान-चारिणीभिर्देवताभिरभिनन्द्यते वत्स-रोहिताश्वस्याभिषेक-महोत्सवः ।

तथाहि ।

एता नद्यो दधति कलशान् सम्भृतांस्तीर्थतोयैः
सान्द्रः स्निग्धः स्थगयति दिशो दुन्दुभीनां निनादः ।
नृत्यन्त्येताः सुर-युवतयो सुक्तमन्दारवर्षाः
स्वैः स्वैरंशैर्नरपतिममी लोकपाला भजन्ते ॥ (घ)

तत् कृतं करणीयमिदानीं ब्रह्मलोकमभिप्रतिष्ठस्व ।

राजा ॥ भगवन् !

---

आश्चर्यम् सिंहासनम् उपनतम् उपस्थितम् एतत् परिणतं पूर्णं यत् शरच्चन्द्रबिम्बं तस्य अनुकारि सदृशं छत्रम् एते ज्योत्स्नाप्रसरवत् धवले हेमदण्डे स्वर्णदण्डवती चामरे तदिदं भृङ्गारस्य अम्भः जलम् अभितः समन्तात् सागरेभ्यः सप्तभ्य इति भावः । सम्भृतं समानीतम् । मन्दाक्रान्तावृत्तम् ।

(घ) एता इति । एता नद्यः सरितः तीर्थतोयैः सम्भृतान् पूर्णान् कलशान् दधति, सान्द्रः उच्चलः स्निग्धः श्रोत्रसुखः दुन्दुभीनां निनादः दिशः स्थगयति व्याप्नोति । एताः सुरयुवतयः सुक्तं त्यक्तं मन्दाराणां देवतरुविशेषकुसुमानां वर्षं याभिः तथाभूताः मन्दारपुष्पाणि वर्षन्त्य इत्यर्थः नृत्यन्ति । अमी च लोकपालाः इन्द्रादयः स्वैः स्वैः अंशैः नरपतिं राजानं भजन्ते राजशरीरे आविर्भवन्तीत्यर्थः । अष्टानां लोकपालानां वपुर्धारयते नृप इति शास्त्रादिति भावः । मन्दाक्रान्तावृत्तम् ।

क्रुद्धे तर्जन-तत्परे खलु गते दष्टाधरे कौशिके
नाथैतान् क्व विहाय गच्छसि नयास्मानप्यनाथानिति।
प्रत्यग्रागतबाष्प-दीनवदनैरुक्तोऽस्मि यैस्तान् कथं
त्यक्त्वात्मम्भरिरभ्युपैमि भवता लोकान् प्रदिष्टानहम्॥ (ङ)

धर्मः॥ राजन्! स्वकर्म(च)-वैचित्र्योच्चावच-स्वभावानां प्रजानां क्व पुनरेतावन्ति भागधेयानि।

राजा॥ क्षणं क्षणार्द्धं सह ताभिरेव
लोकान् प्रजाभिर्विहरामि तांस्तान्।
ममैव वा पुण्यलवेन तासां
भवन्तु लोका भवता प्रदिष्टाः॥ (छ)

---

(ङ) क्रुद्धे इति। क्रुद्धे कोपकलुषिते तर्जनतत्परे दष्टाधरे अधरदंशिनि कौशिके विश्वामित्रे गते प्राप्ते सति हे नाथ! प्रभो! एतान् अनाथान् अस्मान् विहाय क्व कुत्र गच्छसि अस्मानपि नय यत्र त्वं गच्छसीति भावः इति प्रत्यग्रैः नवैः आगतैः बाष्पैः अश्रुभिः दीनं वदनं येषां तादृशैः यैः उक्तः कथितः अस्मि, तान् त्यक्त्वा अहम् आत्मम्भरिः स्वार्थपरायणः सन् भवता प्रदिष्टान् लोकान् ब्रह्मलोकान् कथम् अभ्युपैमि गच्छामि। शार्दूलविक्रीडितं वृत्तम्।

(च) स्वकर्मेति। स्वानि कर्माणि तेषां वैचित्र्येण पार्थक्येन उच्चावचाः बहुविधाः स्वभावा यासां तासां प्रजानाम् एतावन्ति ब्रह्मलोकप्राप्तियोग्यानीति भावः भागधेयानि भाग्यानि कुतः।

(छ) क्षणमिति। क्षणं क्षणार्द्धं वा ताभिः प्रजाभिरेव सह तान् तान् लोकान् विहरामि विहर्तुमिच्छामि, ममैव पुण्यलवेन सुकृतलेशेन भवता प्रदिष्टा लोकाः तासां प्रजानां भवन्तु। उपजातिवृत्तम्।

धर्मः ॥ सविस्मयम् ॥ अहो ! लोकोत्तरं (ज) चरितमस्य राजर्षेः । राजन् ! अनेन पुण्यदान-सम्भावितेनापरेण पुण्यसम्भारेण प्रजानामात्मनश्चोपार्जिताः शाश्वता लोकाः । तदुच्यतां किं ते भूयः प्रियमुपकरोमि ।

राजा ॥ भगवन् ! अतःपरमपि प्रियमस्ति । तथाहि,

विद्या-लाभात् मुनिरपि मयि त्यक्तमिथ्याभ्यसूयो
लब्धा प्राणानयमपि शिशुश्चक्रवर्त्तित्वमाप्तः ।
दृष्टः साक्षात् त्वमपि भगवन् ! ब्रह्मसालोक्यमाप्तं
किंवा तत् स्याद्यदपरमतो यत् प्रियं प्रार्थयिष्ये ॥

तथापीदमस्तु ।

प्रमुदित-सुजना समृद्ध-शस्या
भवतु मही विजयी च भूमिपालः ।
कविभिरुपहिता निजप्रबन्धे
गुणकणिका ह्यनुगृह्यतां गुणज्ञैः ॥ (झ)

---

(ज) लोकोत्तरम् अलौकिकम् । पुण्यदानेन सम्भावितः उपार्जितं तेन । शाश्वता अक्षयाः विद्येति हे भगवन् ! मुनिः विश्वामित्रः विद्यानां लाभात् मयि त्यक्ता मिथ्या अभ्यसूया क्रोधः येन तथोक्तः, अयं शिशुः रोहिताश्वश्च प्राणान् लब्ध्वापि चक्रवर्त्तित्वं साम्राज्यम् आप्तः प्राप्तः । त्वमपि साक्षात् मूर्त्तिमान् दृष्टः, ब्रह्मसालोक्यम् आप्तं प्राप्तञ्च मयेति शेषः अतोऽस्मात् अपरम् अन्यत् यत् प्रियं प्रार्थयिष्ये, तत् किं वा स्यात् न किमपि प्रियमस्तीति भावः ।

(झ) प्रमुदितेति । मही पृथिवी प्रमुदिता आनन्दिताः सुजनाः साधवः यस्यां तथोक्ता, तथा समृद्धानि सम्यक् वृद्धिं गतानि शस्यानि

अपिच ।

येनादिश्य प्रयोगं घनपुलकभृता नाटकस्यास्य हर्षाद्
वस्त्रालङ्कारहेम्नां प्रतिदिनमकृशा राशयः सम्प्रदत्ताः ।
तस्य क्षत्र-प्रभूतेर्भ्रमतु जगदिदं कार्त्तिकेयस्य कीर्त्तिः
पारे क्षीराख्यसिन्धोरपि कवियशसा सार्द्धमग्रेसरेण ॥ (ञ)

॥ इति निष्क्रान्ताः सर्व्वे ॥

## इति आर्य्य-क्षेमीश्वर-कृते चण्डकौशिक-नाटके पञ्चमोऽङ्कः समाप्तिमगमत् ।

। सम्पूर्णम् ।

---

यस्यां तथाभूता, भूमिपालः राजा च विजयी भवतु । तथा गुणज्ञैः गुणग्राहिभिः विद्वद्भिः कविभिः निजप्रबन्धे स्वग्रन्थे उपहिता अर्पिता गुणकणिका कणामात्रकोऽपि गुणः अनुगृह्यतां हि, अनुग्रहेण गृह्यतामेव ।

(ञ) येनेति श्लोकः कविना नाटकाभिनयप्रयोजकस्य राज्ञः कार्त्तिकेयस्य स्तुतिरूपेण कीर्त्तितः न तु हरिश्चन्द्रोक्तिरिति परिहृतः ।

पञ्चमाङ्कः समाप्तः ।

इति श्रीजीवानन्द-विद्यासागर-भट्टाचार्य्य
विरचिता चण्डकौशिकव्याख्या
समाप्ता ।

---

५८ बृहदारण्यक सटीक सभाष्य १०
६० सुश्रुत वैद्यक ४
६१ शार्ङ्गधर (वैद्यक) १
६२ वेतालपञ्चविंशतिः ॥०
६३ पातञ्जलदर्शन(सभाष्यसटीक) ४
६४ आत्मतत्त्वविवेक(बौद्धाधिकार) २
६५ मुक्तिकोपनिषत् /
६६ उपमान चिन्तामणि ।०
६७ नागानन्द नाटक १
६८ पूर्णप्रज्ञ दर्शनम् सभाष्य २
६९ चन्द्रशेखरचम्पू काव्य २
७० सामवेदस्य मन्त्र ब्राह्मणम् (भाष्य सहितम) २
७१ सामवेदस्य आरण्यसंहिता सायणाचार्य कृत भाष्यसहिता १
७२विद्धशालभञ्जिकानाटिका सटीक१
७३ कारण्डव्यूह(बौद्धशास्त्र) २
७४ कुवलयानन्द अलङ्कारसटीक २
७५ प्रियदर्शिका नाटिका सटीक ॥
७६ सारस्वत व्याकरण सटीक पूर्वार्द्धम् १।
७७ वासवदत्ता सटीक २
७८ (कालिदास कृत पुष्पबाण- विलास काव्य सटीक ॥
७९ महिम्न शतकम्, पदारविन्द शतकम्, स्तुतिशतकम्, मन्दस्मित शतकम्, कटाक्षशतकम्, १
८० मनुसंहिता टीका सहित ५
८१ नैषधचरितम् टीका सहित १०
८२ चन्द्रलोक प्राचीन अलङ्कार ॥
८३ वीरमित्रोदय (स्मृतिशास्त्र) १०
८४ भावप्रकाश (वैद्यक) १०
८५ प्रबोधचन्द्रोदय नाटक सटीक १
८६ अनर्घराघवनाटक(मुरारिकृत)२
८७ दैवतब्राह्मण सभाष्य १
८८ षड्विंशब्राह्मणम् सभाष्य १
८९ मीमांसा परिभाषा ॥०
९० अर्थसंग्रह(लौगाक्षीमीमांसा)॥०
९१ रघुवंश सटीक १॥०
९२ मेघदूत सटीक ॥
९३ कथासरित्सागर (सम्पूर्ण) ६
९४ ईश्वरानुमानचिन्तामणि (गङ्गेशोपाध्याय कृत) १
९५ न्यायदर्शन सभाष्य सवृत्ति ७॥
९६ सटीक वाल्मीकिरामायण बालकाण्डम् २
९७ साहित्यदर्पण टीकासहित अलङ्कार शास्त्र ४
९८ मदनपालनिघण्टुः (वैद्यक) १
९९ संस्कृतशिक्षामञ्जरीप्रथमभागः /
१००संस्कृतशिक्षामञ्जरीद्वितीयभागः ।०
१०१ साहित्यदर्पणम् (अलङ्कार) १॥
१०२ श्रीहर्षचरित बाणभट्टकृत २
१०३ अमरकोष ॥
१०४ वेदान्तसूत्र शङ्कराचार्यकृत शारीरकभाष्य तथा गोविन्दानन्द कृत टीका सहित १०
१०५ वेदान्तपरिभाषा १
१०६ वेदान्तसारसटीक १
१०७ सटीक निदान (वैद्यक) ४
१०८ कामन्दकी नीतिसार १
१०९ मल्लिकामारुतप्रकरण सटीक २

११० अत्रि, विष्णु, हारीत याज्ञवल्क्य, उशना, अङ्गिरा, यम, आपस्तम्ब, संवर्त्त, कात्यायन, वृहस्पति पराशर, व्यास, शङ्ख, लिखित, दक्ष गौतम शातातप वशिष्ठ प्रणीत संहिता (धर्मशास्त्र) १५

१११ मत्स्यपुराण ६

११२ चरकसंहिता(वैद्यक)सम्पूर्ण १०

११३ रसेन्द्रचिन्तामणि तथा रसरत्नाकर (वैद्यक) ६

११४ भगवद्गीता शङ्करभाष्य आनन्दगिरिकृतटीका तथा सुबोधिनीसमेत५

११५ शब्दशक्तिप्रकाशिका १

११६ मालतीमाधव सटीक १॥

११७ सटीक भट्टिकाव्य ४

११८ सटीक काव्यप्रकाश ४

११९ सभाष्य शाण्डिल्यसूत्र ॥≠

१२० लघुकौमुदीव्याकरणम् ॥०

१२१ महानाटकम्(हनुमन्नाटक) १

१२२ दशरूपकम्(अलङ्कार) १॥०

१२३ भोजचम्पू (भोजदेवकृत सम्पूर्णरामायणम्) १

१२४ भारत चम्पू सटीक ४

१२५ मार्कण्डेयपुराणम् ५

१२६ गोलाध्यायः १

१२७ गणिताध्यायः १

१२८ पञ्चदशी (सटीक) ३

१२९ पातञ्जलदर्शनम् भोजवृत्तिः १

१३० शकुन्तलानाटक सटीक १

१३१ शब्दरूपादर्शः ॥०

१३२ वृहत्संहिता वा वाराहीसंहिता ४।≈

१३३ तर्कामृत (जगदीशकृत) ।०

१३४ द्वात्रिंशत्पुत्तलिका १

१३५ उत्तररामचरित सटीक २।

१३६ शङ्करविजय १॥०

१३७ मृच्छकटिकप्रकरण सटीक २

१३८ काव्यादर्शसटीक(अलङ्कार) २

१३९ अष्टाङ्गहृदय संहिता (वाग्भटकृत वैद्यक) ३

१४० शुक्रनीति सटीक २

१४१ गीतगोविन्द सटीक ॥०

१४२ अग्निपुराणम् ७

१४३ विष्णुपुराणम् सटीक ५

१४४ मीमांसादर्शन सभाष्य १२

१४५ अध्यात्मरामायणम् सटीक ४

१४६ महानिर्वाणतन्त्रम् सटीक ४

१४७ मीमांसादर्शनस्य अधिकरणमाला १०

१४८ श्रुतबोधः (छन्दोग्रन्थ) —

१४९ बालरामायण नाटक सटीक ३

१५० लिङ्गपुराणम् ५।

१५१ चण्डकौशिकनाटक सटीक ॥०

१५२ चैतन्यचन्द्रोदयनाटक सटीक २

१५३ कलापव्याकरणम् २

१५४ कुसुमाञ्जलि सटीक ।

१५५ संगीत पारिजात १॥०

कलिकाता संस्कृतविद्यामन्दिरे बि, ए, उपाधिधारिणः श्रीजीवानन्द विद्यासागर-भट्टाचार्य्यस्य सकाशात् लभ्यानि ।